TRIVANDRUM SANSKRIT SERIES

No. L.

# THE RASÂRNAVASUDHÂKARA

BY

SRÎ SINGA BHÛPÂLA

EDITED BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts, Trivandrum*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1916

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५०.

---

# रसार्णवसुधाकरः

श्रीशिङ्गभूपालप्रणीतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

---

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोलम्बाब्दाः १०९१, क्रैस्ताब्दाः १९१६.

# PREFACE.

The edition of the Rasârnavasudhâkara is based on the following six palm-leaf manuscripts :—

क Belonging to the Palace Library, running up to the en of second vilâsa.

ख. Belonging to the Raja of Panthalam, wanting in a few leaves.

ग Lent by Kailasapuram Govinda Pisharodi

घ. Lent by Mr Devan Parameswaran Numburi, Idappalli.

ङ Lent by Mr. Krishna Varyar, Chunakkara.

च. Belonging to Kailasapuram Govinda Pisharodi, containing merely the Lakshana Slokas

The first of these manuscripts is in Tamil grantha characters, while all the others are in Malayalam characters. At the end of the manuscript marked ग is found a colophon stating that the manuscript was copied in the Kollam year 756, corresponding to the year 1580 of the Christian era.

The introductory portion of the work shows that it was written by Singabhûpâla of the Rechalla dynasty who ruled over the country lying between the Vindhyas and Srîsaila, of which Râjâchalam was the hereditary capital. He was born of Ananta alias Anapota and Annamâmbâ and his great grandfather and grandfather were respectively Dâchayanâyaka and Singaprabhu. The late Mr. Seshagiri Sastri M. A., Professor of Sanskrit, Presidency College, Madras calls Singabhûpâla Singamanâyaka and fixes his date at about 1330 A. C, on the authority of a biographical sketch of the Rajas of Venkatagiri *

---

* Vide pp 7-10, Report on a search for Sanskrit and Tamil manuscripts, for the year 1896 97, by M Seshagiri Sastri, M. A. Madras.

The work presents in a clear and detailed form in three chapters the canons of dramaturgy which are briefly treated in the Dasarûpaka in four chapters, and among the extant treatises on dramaturgy, I think, there is no work so comprehensive and at the same time so simple as this.

Trivandrum,
11-8-1916.

T. GAṆAPATI SÂSTRÎ.

# निवेदना ।

अस्य रसार्णवसुधाकरस्य संशोधनाधारभूतास्तालपत्रादर्शग्रन्थास्तावदेते —

१. राजकीयग्रन्थशालीयो द्वितीयविलासान्तः क.संज्ञः,

२. पन्तलराजस्वामिकः किञ्चिदूनः ख.संज्ञः,

३. कैलासपुरगोविन्दपिषारोटिसम्बन्धी ग.संज्ञः,

४. इटप्पळ्ळि देवपरमेश्वरनम्पूरिस्वामिको घ.संज्ञः,

५. चुनक्करकृष्णवार्यसम्बन्धी ङ.संज्ञः,

६. उक्तगोविन्दपिषारोटिस्वामिको लक्षणश्लोकमात्रात्मकः च.संज्ञः ।

अत्र प्रथमो द्रमिलग्रन्थलिपिः, अन्ये केरलीयग्रन्थलिपयः । ग.संज्ञः ७५६ तमे कोलम्बाब्दे लिखित इति तद्ग्रन्थान्ते लिखितं दृश्यते ।

अस्य ग्रन्थस्य प्रणेता शिङ्गभूपालः शौर्यौदार्यादिगुणसम्पन्नो रेचल्लवंशजस्य दाचयनायकस्य प्रपौत्रः शिङ्गप्रभोः पौत्रः अनन्तस्य अनपोतापरपर्यायस्य अन्नमाम्बायामुत्पन्नः पुत्रः स्ववंशक्रमराजधानीं राजाचलाभिधानामधिवसन् विन्ध्यश्रीशैलमध्यगतं भूमण्डलं परिपालितवानिति ग्रन्थावतरणिकातोऽवगम्यते । अतीतो मद्रपुरराजकीयाङ्गलविद्याशालासंस्कृतप्रवक्ता एम्. श्रीशेषगिरिशास्त्री इमं शिङ्गभूपालं शिङ्गमनायकनाम्ना व्यपदिशन् वेङ्कटगिरिराजवंशावलिग्रन्थपर्यालोचनया १३३० तमक्रैस्ताब्दासन्नस्थितमुक्तवान् । *

---

* Vide No 1, report on a search of Sanskrit and Tamil Mss for the year 1896-97 by Professor M Seshagiri Sastri, M A, pp 7-10

दशरूपके चतुर्भिः प्रकाशैर्यद् वस्तुजातं प्रतिपादितं, तदिह रसार्णवसुधाकरे त्रिभिर्विलासैर्वितत्य विशदतरं व्युत्पाद्यते । लब्धप्रचारेषु रूपकलक्षणग्रन्थेषु रूपकसम्बद्धसकलप्रमेयव्युत्पादनक्षमः परमललित ईदृशो ग्रन्थो, मन्ये, न कश्चिदस्ति ॥

अनन्तशयनम्,
१९१६-४-११. त. गणपतिशास्त्री.

# विषयानुक्रमणी ।

---

## द्वितीयो विलासः।

---

## तृतीयो विलासः

| विषयः. | पृष्ठम्. |
|---|---|

# रसार्णवसुधाकरे स्मृतानि रूपकाणि ।

---

कालिदास-भवभूति-श्रीहर्ष-राजशेखरप्रणीतानि नाटकानि
मृच्छकटिकम्
वेणीसंहारम्
मुद्राराक्षसम्
अनर्घराघवम्
प्रसन्नराघवम्
धनञ्जयविजयम् (व्यायोगः)
अभिरामराघवम् (अनपोतनायकीयम्)
अमोघराघवम्
माधवीवीथिकम् (वीथी)
मायाकुरङ्गिका (ईहामृगः)
पद्मावती
कामदत्तम् (प्रकरणम्)
रामानन्दम्
करुणाकन्दलम् (अङ्कः)
वीरभद्रविजृम्भणम् (डिमः)
महेश्वरानन्दम्
आनन्दकोशः (प्रहसनम्)
शृङ्गारमञ्जरी (भाणः)
पयोधिमथनम् (समवकारः)
कन्दर्पसम्भवः
वीरानन्दम्

---

॥ श्रीः ॥

श्रीशिङ्गभूपालप्रणीतः

# रसार्णवसुधाकरः ।

---

## प्रथमो विलासः ।

---

शृङ्गारवीरसौहार्दं मौग्ध्यवैयात्यसौरभम् ।
लास्यताण्डवसौजन्यं दाम्पत्यं तद् भजामहे ॥ १ ॥

वीणाङ्कितकरां वन्दे वाणीमेणीदृशं सदा ।
सदानन्दमयीं देवीं सरोजासनवल्लभाम् ॥ २ ॥

अस्ति किञ्चित् परं वस्तु परमानन्दकन्दलम् ।
कमलाकुचकाठिन्यकुतूहलिभुजान्तरम् ॥ ३ ॥

तस्य पादाम्बुजाज्जातो वर्णो विगतकल्मषः ।
यस्य सोदरतां प्राप्तं भगीरथतपःफलम् ॥ ४ ॥

तत्र रेचल्लवंशाब्धिशरद्राकासुधाकरः ।
कलानिधिरुदारश्रीरासीद् दाचयनायक[2]ः ॥ ५ ॥

यस्यासिधारामार्गेण दुर्गेणापि रणाङ्गणे ।
पाण्ड्यराजगजानीकाज्जयलक्ष्मीरुपागता ॥ ६ ॥

१. 'भाग्यं दा' क. पाठः  २. 'म' ज पाठः

G P T. 110 500 2—2—1091 B

खड्गनारायणे यस्मिन् भवति श्रीरतिस्थिरा ।
भूरभूत् कारिणी वश्या दुष्टराजगजाङ्कुशे ॥ ७ ॥

तस्य भार्या महाभाग्या विष्णोः श्रीरिव विश्रुता ।
वोचमाम्बा गुणोदारा जाता तामरसान्वयात् ॥ ८ ॥

तयोरभूवन् क्षितिकल्पवृक्षाः
पुत्रास्त्रयस्त्रासितवैरिवीराः ।
शिङ्गप्रभुर्वे[2]न्नमनायकश्च
वीराग्रणी रेचमहीपतिश्च ॥ ९ ॥

कलावेकपदो धर्मो यैरेभिश्चरणैरिव ।
सम्पूर्णपदतां प्राप्य नाकाङ्क्षति कृतं युगम ॥ १० ॥

तत्र शिङ्गमहीपाले पालयत्यखिलां महीम् ।
नमतामुन्नतिश्चित्रं राज्ञामनमतां नतिः ॥ ११ ॥

कृष्णैलेश्वरसन्निधौ कृतमहासम्भारमेलेश्वरे
वीतापायमनेकशो विदधता ब्रह्मप्रतिष्ठापनम् ।
आनृण्यं समपादि येन विभुना तत्तद्गुणैरात्मनो
निर्माणातिशयप्रयासगरिमव्यासङ्गिनि ब्रह्मणि ॥ १२ ॥

कृतान्तजिह्वाकुटिलां कृपाणीं
दृष्ट्वा यदीयां त्रसतामरीणाम् ।
स्वेदोदयश्चेतसि सञ्चितानां
मौ[3]नोष्मणामातनुते प्रशान्तिम् ॥ १३ ॥

१ 'गर्भना' क. पठः. २. 'ण' घ पाठ. ३ 'तापोष्म' क. पाठ'.

श्रीमान्नेचमहीपतिः सुचरितो यस्यानुजन्मा स्फुटं
प्राप्तो वीरगुरुप्रथां पृथुतरां वीरस्य मुद्राकरीम् ।
लब्ध्वा लब्धकठारिरायबिरुदं राहुत्तरायाङ्कितं
पुत्रं नागयनायकं वसुमतीवीरैकचूडामणिम् ॥ १४ ॥

सोऽयं शिङ्गमहीपालो वसुदेव इति स्फुटम् ।
अनन्तमाधवौ यस्य तनूजौ लोकरक्षकौ ॥ १५ ॥

तत्रानुजो माधवनायकेन्द्रो
दिगन्तरालप्रथितप्रतापः ।
यस्याभवन् वंशकरा नरेन्द्रा-
स्तनूभवा वेदगिरीन्द्रमुख्याः ॥ १६ ॥

तस्याग्रजन्मा भुवि राजदोषै-
रप्रोतभावादनपोतसंज्ञाम् ।
ख्यातां दधाति स्म यथार्थभूता-
मनन्तसंज्ञां च महीधरत्वात् ॥ १७ ॥

सोदर्यो बलभद्रमूर्तिरनिशं देवी प्रिया रुक्मिणी
प्रद्युम्नस्तनयोऽपि पौत्रनिवहो यस्यानिरुद्धादयः ।
सोऽयं श्रीपतिरन्नपोतनृपतिः किञ्चाननाम्भोरुहे
धत्ते चारुसुदर्शनाश्रियमसौ स त्वात्महस्ताम्बुजे ॥ १८ ॥

बहुसोमसुतं कृत्वा भूलोकं यत्र रक्षति ।
एकसोमसुतं रक्षन् स्वर्लोकं लज्जते हरिः ॥ १९ ॥

सोमकुलपरशुरामे भुजबलभीमेऽरिगायिगोपाले(?) ।
यत्र च जाग्रति शासति जगतां जागर्ति नित्यकल्याणम् ॥

हेमाद्रिदानैर्धरणीसुराणां
महाचलं हस्तगतं विहाय ।
यश्चारुसोपानपथेन चक्रे
श्रीपर्वतं सर्वजनप्रगम्यम् ॥ २१ ॥

यो नैकवीरोद्दलनोऽप्यसङ्ख्य-
सङ्ख्योऽप्यभग्नात्मगतिक्रमोऽपि ।
अजातिसाङ्कर्यभवोऽपि[2] चित्रं
दधाति सोमान्वयभार्गवाङ्कम् ॥ २२ ॥

धावं धावं रिपुनृपतयो युद्धरङ्गापविद्धाः
खड्गे खड्गे फलितवपुषं यं पुरस्ताद् विलोक्य ।
प्रत्यावृत्ता अपि ततइतो वीक्षमाणा यदीयं
सम्मन्यन्ते स्फुटमवितथं खड्गनारायणाङ्कम् ॥२३ ॥

अन्नमाम्बेति विख्याता तस्यासीद्धरणीपतेः ।
देवी शिवा शिवस्येव राजमौलेर्महोज्ज्वला ॥ २४ ॥

शत्रुघ्नं श्रुतकीर्तिर्या सुभद्रा यशसार्जुनम् ।
आनन्दयति भर्तारं श्यामा राजानमुज्ज्वलम् ॥ २५ ॥

तयोरभूतां पुत्रौ द्वावाद्यो देवगिरीश्वरः[3] ।
द्वितीयस्त्वद्वितीयोऽसौ यशसा शिङ्गभूपतिः ॥ २६ ॥

अथ श्रीशिङ्गभूपालो दीर्घायुर्वसुधामिमाम् ।
निजांसपीठे निर्व्याजं कुरुते सुप्रतिष्ठिताम् ॥ २७ ॥

---

१. 'करोऽपि', २. वि ख घ ङ पाठ ३. 'देवगि' क. ख. पाठः

अहीनज्याबन्धः कनकरुचिरं कार्मुकवरं
बलिध्वंसी बाणः परपुरमनेकं च विषयः ।
इति प्रायो लोकोत्तरसमरसन्नाहविधिना
महेशोऽयं शिङ्गक्षितिप इति यं जल्पति जनः ॥ २८ ॥

यत्र च रणसन्नाहिनि तृणचरणं निजपुराच्च निस्सरणम् ।
वनचरणं तच्चरणकपरिचरणं वा विरोधिनां शरणम् ॥२९॥

सतां प्रीतिं कुर्वन् कुवलयविकासं विरचयन्
कलाः कान्ताः पुष्णन् दधदपि च जैवातृककथाः ।
नितान्तं यो राजा प्रकटयति मित्रोदयमहो
तथा चक्रानन्दामपि च कमलोल्लाससुषमाम् ॥ ३० ॥

तल्लब्धानि घनाघनैरतितरां वारां पृषन्त्यम्बुधेः
स्वात्यामेव हि शुक्तिकासु दधते मुक्तानि मुक्तात्मताम् ।
यद्दानोदकविप्रुषस्तु सुधियां हस्ते पतन्त्योऽभवन्
माणिक्यानि महाम्बराणि बहुशो धामानि हेमानि च ॥३१॥

नयमनयं गुणमगुणं पदमपदं निजमवेक्ष्य रिपुभूपाः ।
यस्य च नयगुणविदुषो विनमन्ति पदारविन्दपीठान्तम् ॥३२॥

प्राणानां परिरक्षणाय बहुशो वृत्तिं मदीयां गता-
स्त्वत्सामन्तमहीभुजः करुणया ते रक्षणीया इति ।
कर्णे वर्णयितुं नितान्तसुहृदोः कर्णान्तविश्रान्तयो-
र्मन्ये यस्य दृगन्तयोः परिसरं सा कामधेनुः श्रिता ॥ ३३ ॥

१. 'विभवस', २. स्वल्पान्येव' क. पाठः.

युष्माभिः प्रतिगण्डभैरवरणे प्राणाः कथं रक्षिता
इत्यन्तःपुरपृच्छया यदरयो लज्जावशं प्रापिताः ।
शंसन्त्युत्तरमाननव्यतिकरव्यापारपारङ्गता
गण्डान्दोलितकर्णकुण्डलहरिन्माणिक्यव्रणाङ्कुराः ॥ ३४ ॥

मन्दारपारिजातकचन्दनसन्तानकल्पमणिसदृशैः ।
अनपोतदाचवल्लभवेदगिरिस्वामिमांचया[1](न्वमप?न्नय)संज्ञैः ॥

आत्मभवैरनितरजनसुलभ(दया)दानविदितैरपि यः ।
रत्नाकर इव राजति राजकरारञ्चितकमलोल्लासः ॥३६॥

यस्याद्यः[2] प्रथमः कुमारतिलकः श्रीयन्नपोतो गुणै-
रेकस्याग्रजमात्मरूपविभवे चापे द्वयोरग्रजम् ।
आरूढे त्रितयाग्रजं विजयते दुर्वारदोर्विक्रमे
सत्योक्तौ चतुरग्रजं वितरणे किञ्चापि पञ्चाग्रजम् ॥३७॥

युद्धे यस्य कुमारदाचयविभोः खड्गाग्रधाराजले
मज्जन्ति प्रतिपक्षभूमिपतयः शौर्योष्मसन्तापिताः ।
चित्रं तत्प्रमदाः प्रनष्टतिलका व्याकीर्णनीलालकाः
प्रभ्रश्यत्कुचकुङ्कुमाः परिगलन्नेत्रान्तकालाञ्जनाः ॥ ३८ ॥

परिपोषिणि यस्य पुत्ररत्ने
दयिते वल्लभरायपूर्णचन्द्रे ।
समुदेतु सतां प्रभाविशेषः
कमलानामभिवर्धनं तु चित्रम् ॥ ३९ ॥

१ 'दयाणसं' ग, 'दयाणायसं' घ. ङ. पाठ. २. 'यं' क पाठ.

एतैरन्यैश्च तनयैः सोऽयं शिङ्गमहीपतिः ।
षड्भिः प्रतिष्ठामयते स्वामीवाङ्गैः सुसङ्गतैः ॥ ४० ॥

राजा स राजाचलनामधेया-
मध्यास्य वंशक्रमराजधानीम् ।
सतां च रक्षामसतां च शिक्षां
न्यायानुरोधादनुसन्दधार ॥ ४१ ॥

विन्ध्यश्रीशैलमध्यक्ष्मामण्डलं पालयन् सुतैः ।
वंशप्रवर्तकैरर्थान् भुङ्क्ते भोगपुरन्दरः ॥ ४२ ॥

तस्मिन् शासति शिङ्गभूमिरमणे क्ष्मामन्नपोतात्मजे
काठिन्यं कुचमण्डले [1]तरलता नेत्राञ्चले सुभ्रुवाम् ।
वैषम्यं त्रिवलीषु मन्दपदता लीलालसायां गतौ
कौटिल्यं चिकुरेषु किञ्च कृशता मध्ये परं बध्यते ॥ ४३ ॥

सोऽहं कल्याणरूपस्य वर्णोत्कर्षैककारकम् ।
विद्वत्प्र[2]सादनाहेतोर्वक्ष्ये नाट्यस्य लक्षणम ॥ ४४ ॥

पुरा पुरन्दराद्यास्ते प्रणम्य चतुराननम् ।
कृताञ्जलिपुटा भूत्वा पप्रच्छुः सर्ववेदिनम् ॥ ४५ ॥

भगवन्! श्रोतुमिच्छामः श्राव्यं दृश्यं मनोरमम् ।
धर्म्यं यशस्यमर्थ्यं च सर्वशिल्पप्रदर्शनम् ॥ ४६ ॥

परं पञ्चममाम्नायं सर्ववर्णाधिकारिकम् ।
इति पृष्टः स तैर्ब्रह्मा सर्ववेदाननुस्मरन् ॥ ४७ ॥

१. 'चपलता' क. ग. घ पाठ. २ 'सन्तताहे' इ पाठ

तेभ्यश्च सारमादाय नाट्यवेदमथासृजत् ।
अध्याप्य भरताचार्यं प्रजापतिरभाषत ॥ ४८ ॥

सह पुत्रैरिमं वेदं प्रयोगेण प्रकाशय ।
इति तेन नियुक्तस्तु भरतः सह सूनुभिः ॥ ४९ ॥

प्रायोजयत् सुधर्मायामिन्द्रस्याप्सरसां गणैः ।
सर्वलोकोपकाराय नाट्यशास्त्रं च निर्ममे ॥ ५० ॥

तथा तदनुसारेण शाण्डिल्यः कोहलोऽपि च ।
दत्तिलश्च मतङ्गश्च ये चान्ये तत्तनूद्भवाः ॥ ५१ ॥

ग्रन्थान् नानाविधांश्चक्रुः प्रख्यातास्ते महीतले ।
तेषामतिगभीरत्वाद् विप्रकीर्णक्रमत्वतः ॥ ५२ ॥

सम्प्रदायस्य विच्छेदात् तद्विदां विरलत्वतः ।
प्रायो विरलसञ्चारा नाट्यपद्धतिरस्फुटा ॥ ५३ ॥

तस्मादस्मत्प्रयत्नोऽयं तत्प्रकाशनलक्षणः ।
सारैकग्राहिणां चित्तमानन्दयति धीमताम् ॥ ५४ ॥

नेदानीन्तनदीपिका किमु तमस्सङ्घातमुन्मूलये-
ज्ज्योत्स्ना किं न चकोरपारणकृते तत्कालसंशोभिनी ।
बालः किं कमलाकरान् दिनमणिर्नोल्लासयेदञ्जसा
तत्सम्प्रत्यपि मादृशामपि वचः स्यादेव सत्प्रीतये ॥५५॥

स्वच्छस्वादुरसाधारो वस्तुच्छायामनोहरः ।
सेव्यः सुवर्णनिधिवद् नाट्यमार्गस्य नायकः ॥ ५६ ॥

सात्त्विकाद्यैरभिनयैः प्रेक्षकाणां यतो भवेत् ।
नटे नायकतादात्म्यबुद्धिस्तन्नाट्यमुच्यते ॥ ५७ ॥

रसोत्कर्षो हि नाट्यस्य प्राणास्तत् स निरूप्यते ।
विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ॥ ५८ ॥
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ।
तत्र ज्ञेयो विभावस्तु रसज्ञापनकारणम् ॥ ५९ ॥
बुधैर्ज्ञेयोऽयमालम्ब उद्दीपनामिति द्विधा ।
आधारविषयत्वाभ्यां नायको नायिकापि च ॥ ६० ॥
आलम्बनं मतं तत्र नायको गुणवान् पुमान् ।
तद्गुणास्तु महाभाग्यमौदार्यं स्थैर्यदक्षते ॥ ६१ ॥
औज्ज्वल्यं धार्मिकत्वं च कुलीनत्वं च वाग्मिता ।
कृतज्ञत्वं नयज्ञत्वं शुचिता मानशालिता ॥ ६२ ॥
तेजस्विता कलावत्त्वं प्रजारञ्जकतादयः ।
एते साधारणाः प्रोक्ता नायकस्य गुणा बुधैः ॥ ६३ ॥

तत्र महाभाग्यं —

सर्वातिशायिराज्यत्वं महाभाग्यमुदाहृतम् ।

यथा —

पौत्रः कुशस्यापि कुशेशयाक्षः
ससागरां सागरधीरचेताः ।
एकातपत्रां भुवमेकवीरः
पुरार्गलादीर्घभुजो[2] बुभोज ॥

अथौदार्यं —

यद् विश्राणनशीलत्वं तदौदार्यं बुधा विदुः ॥ ६४ ॥

१. 'र्यं' ग. पाठ. २. 'दण्डभु' ङ. पाठ

यथा—

जनस्य साकेतनिवासिनस्तौ
द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी
नृपोऽर्थिकामादधिकप्रदश्च ॥

अथ स्थैर्यं—

व्यापारं फलपर्यन्तं स्थैर्यमाहुर्मनीषिणः ।

यथा—

न नवप्रभुरा फलोदयात् स्थिरकर्मा विरराम कर्मणः ।
न च योगविधेर्नवेतरः स्थिरधीरा परमार्थदर्शनात् ॥

अथ दक्षता—

दुष्करे क्षिप्रकारित्वं दक्षतां परिचक्षते ॥ ६५ ॥

यथा—

बालधिं त्रातुमावृत्य चमरेणार्पिते गले ।
पतन्तमिषुमन्येन स कृपालुरखण्डयत् ॥

अथौज्ज्वल्यम्—

औज्ज्वल्यं नयनानन्दकारित्वं कथ्यते बुधैः ।

यथा—

ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥

अथ धार्मिकत्वं—

धर्मप्रवणचित्तत्वं धार्मिकत्वमितीर्यते ॥ ६६ ॥

१. 'वी' क. ख. पाठ.

यथा—

स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये ।
अभ्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥

अथ कुलीनत्वं—

कुले महति सम्भूतिः कुलीनत्वमुदाहृतम् ।

यथा—

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयंवृतपतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥

अथ वाग्मिता—

वाग्मिता तु बुधैरुक्ता समयोचितभाषिता ॥ ६७ ॥

यथा—

ननु वज्रिण एव वीर्यमेतद् विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकन्दराद् विसर्पी प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥

अथ कृतज्ञत्वं—

कृतानामुपकाराणामभिज्ञत्वं कृतज्ञता ।

यथा—

एकस्यैवोपकारस्य प्राणान् दास्यामि ते कपे! ।
प्रत्यहं क्रियमाणस्य शेषस्य ऋणिनो वयम् ॥

अथ नयज्ञत्वं—

सामाद्युपायचातुर्यं नयज्ञत्वमुदाहृतम् ॥ ६८ ॥

यथा—

अनारतं तेन पदेषु लम्भिता
विभज्य सम्यग् विनियोगिसत्क्रियाः ।

फलन्त्युपायाः परिबृंहितायती-
रुपेत्य सङ्घर्षमिवार्थसम्पदः ॥

अथ शुचिता —

अन्तःकरणशुद्धिर्या शुचिता सा प्रकीर्तिता ॥

यथा —

का त्वं शुभे! कस्य परिग्रहो वा
किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां
मनः परस्त्रीविमुखप्रवृत्ति ॥

अथ मानिता —

अकार्पण्यसहिष्णुत्वं कथिता मानशालिता ॥ ६९ ॥

यथा —

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डल-
क्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् ।
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं कथ्यते ॥

अथ तेजस्विता —

तेजस्वित्वमवज्ञादेरसहिष्णुत्वमुच्यते ।

यथा —

सोऽयं त्रिस्सप्तवारानविकलविकलक्षत्रतन्त्रप्रमाथो
वीरः क्रौञ्चस्य भेदी कृतधरणितलापूर्वहंसावतारः ।

जेता हेरम्बभृङ्गिप्रमुखगणचमूचक्रिणस्तारकारे-

स्त्वां पृच्छन् जामदग्न्यः स्वगुरुहरधनुर्भङ्गरोषादुपैति ॥

अथ कलावत्त्वं—

कलावत्त्वं निगदितं सर्वविद्यासु कौशलम् ॥ ७० ॥

यथा—

गोष्ठीषु विद्वज्जनसम्मितस्य

कलाकलापस्य स तारतम्यम् ।

विवेकसीमा विगतावलेपो ।

विवेद हेम्नो निकषाश्मनीव ॥

अथ प्रजारञ्जकत्वं —

रञ्जकत्वं तु सकलचित्ताह्लादनकारिता ।

यथा —

अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।

उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥

उत्तैर्गुणैश्च सकलैर्युक्तः स्यादुत्तमो नेता ॥ ७१ ॥

मध्यः कतिपयहीनो बहुगुणहीनोऽधमो नाम ।

नेता चतुर्विधोऽसौ धीरोदात्तश्च धीरललितश्च ॥ ७२ ॥

धीरप्रशान्तनामा ततश्च धीरोद्धतः ख्यातः ।

तत्र धीरोदात्तः—

दयावानतिगम्भीरो विनीतः सत्त्वसारवान् ॥ ७३ ॥

दृढव्रतस्तितिक्षावानात्मश्लाघापराङ्मुखः ।

निगूढाहङ्कृतिर्धीरैर्धीरोदात्त उदाहृतः ॥ ७४ ॥

तत्र दयावत्त्वं यथा —

सशोणितैस्तेन शिलीमुखाग्रै-
निक्षेपिताः केतुषु पार्थिवानाम् ।
यशो हृतं संयति राघवेण
न जीवितं वः कृपयेति वर्णाः ॥

अतिगम्भीरता —

गाम्भीर्यमविकारः स्यात् सत्यपि क्षोभकारणे ।

यथा —

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥

विनीतत्वं यथा —

अवलोक एव नृपतेः स्म दूरतो
रभसाद्रथादवतरीतुमिच्छतः ।
अवतीर्णवान् प्रथममात्मना हरि-
र्विनयं विशेषयति सम्भ्रमेण सः ॥

सत्त्वसारत्वं यथा —

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।
पदाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥

दृढव्रतत्वं यथा —

तमशक्यमपाक्रष्टुं निदेशात् स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात् कर्तुं राज्याधिदेवते ॥

तितिक्षावत्त्वं यथा —

प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।

अनु हुङ्कुरुते घनध्वनिं न तु गोमायुरुतानि केसरी ॥

आत्मश्लाघापराङ्मुखत्वं यथा —

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीलादवनतं शिरः ॥

निगूढाहङ्कारत्वं यथा —

भूमात्रं कियदेतदर्णवमितं तत् साधितं हार्यते
यद् वीरेण भवादृशेन वदता त्रिस्सप्तकृत्वो जयम् ।
डिम्भोऽहं नवबाहुरीदृशमिदं घोरं च वीरव्रतं
तत् क्रोधाद् विरम प्रसीद भगवञ्जात्यैव पूज्योऽसि नः ॥

अथ धीरललितः—

निश्चिन्तो धीरललितस्तरुणो वनितावशः ॥ ७५ ॥

यथा —

सोऽधिकारमधिपः* कुलोचितं
काश्चन स्वयमवर्तयत् समाः ।
सन्निवेश्य सचिवेष्वतःपरं
स्त्रीविधेयनवयौवनोऽभवत ॥

अथ धीरशान्तः —

समप्रकृतिकः क्लेशसहिष्णुश्च विवेचकः ॥
ललितादिगुणोपेतो विप्रो वा सचिवो वणिक् ॥ ७६ ॥
धीरशान्तश्चारुदत्तमाधवादिरुदीरितः ।

यथा —

कुवलयदलश्यामोऽप्यङ्गं दधत् परिधूसरं
सुललितपदन्यासः श्रीमान् मृगाङ्कनिभाननः ।

---

* 'सोऽधिकारमभिकः' इति मुद्रितरघुवंशपाठः ।

हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललन्नरजाङ्गलः ॥

अथ धीरोद्धतः—

मात्सर्यवानहङ्कारी मायावी रोषणश्चलः ॥ ७७ ॥
विकत्थनो भार्गवादिर्धीरोद्धत उदाहृतः ।

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद् भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारक[1]वधाद् विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं[2] विस्मृतः ॥

एते च नायकाः सर्वरससाधारणाः स्मृताः ॥ ७८ ॥
शृङ्गारापेक्षया तेषां त्रैविध्यं कथ्यते बुधैः ।
पतिश्चोपपतिश्चैव वैशिकश्चेति भेदतः ॥ ७९ ॥
पतिस्तु विधिना पाणिग्राहकः कथ्यते बुधैः ।

यथा—

स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥

चतुर्धा सोऽपि कथितो वृत्त्या काव्यविचक्षणैः ॥ ८० ॥
अनुकूलः शठो धृष्टो दक्षिणश्चेति भेदतः ।

तत्र—

अनुकूलस्त्वेकजानिः

---

१. 'दानवव' घ. पाठः. २. 'न' ङ. पाठः.

तत्र धीरोदात्तानुकूलो यथा—

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयव्यापिना तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥

धीरललितानुकूलो यथा—

स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥

धीरशान्तानुकूलो यथा—

प्रियमाधवे ! किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा ।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥

धीरोद्धतानुकूलो यथा—

किं कण्ठे शिथिलीकृता भुजलता स्वापप्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखं नाद्यासि सम्भाविता ।
अन्यस्त्रीजनसङ्कथालघुरहं स्वप्नेऽपि नो लक्षितो[1]
दोषं पश्यसि कं प्रिये! परिचयोपालम्भयोग्ये मयि ॥

अथ शठः—

शठो गूढापराधकृत् ॥ ८१ ॥

यथा—

१. 'नीये म' ड. पाठः.

स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलितास्रबिन्दुभिः क्रोधभिन्नवलयैर्विवर्तनैः ॥

अथ धृष्टः—

धृष्टो व्यक्तान्ययुवतिभोगलक्ष्मा विनिर्भयः ।

यथा ममैव—

को दोषो मणिमालिका यदि भवेत् कण्ठे न किं शङ्करो
धत्ते भूषणमर्धचन्द्रममलं चन्द्रे न किं कालिमा ।
तत् साध्वेव कृतं कृतं भणितिभिर्नैवापराद्धं त्वया
भाग्यं द्रष्टुमनीशयैव भवतः कान्तापराद्धं मया ॥

अथ दक्षिणः—

नायिकास्वप्यनेकासु तुल्यो दक्षिण उच्यते ॥ ८२ ॥

यथा—

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥

अथोपपतिः—

लङ्घिताचारया यस्तु विनापि विधिना स्त्रिया ।
सङ्केतं नीयते प्रोक्तो बुधैरुपपतिस्तु सः ॥ ८३ ॥

यथा—

भर्ता निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः ।
तद् दूरादयमञ्जलिः किममुना दृग्भङ्गिपातेन ते
वैदग्धीरचनाप्रपञ्चरसिक! व्यर्थोऽयमत्र श्रमः ॥

दाक्षिण्यमानुकूल्यं च धार्ष्ट्यं चानियतत्वतः ।
नोचितान्यस्य शाठ्यं स्यादन्यचित्तत्वसम्भवात् ॥ ८४ ॥

शठोपपतिर्यथा —

*मज्झण्णे जणसुण्णे करिणीए भक्खिदेसु कमळेसु ।
अविसेसण्ण! कहं विअ गदो सि सणवाडिअं दट्ठुं ॥

अत्र कयाचित् स्वैरिण्या मयि सङ्केतं गतायां त्वं तु शणवाटिकायां कयापि रन्तुं गतोऽसीति व्यङ्ग्यार्थेनान्यासङ्ग[1]-सूचनादयं शठोपपतिः ।

अथ वैशिकः—

रूपवाञ् शीलसम्पन्नः शास्त्रज्ञः प्रियदर्शनः ।
कुलीनो मतिमाञ् शूरो रम्यवेषयुतो युवा ॥ ८५ ॥
अदीनः सुरभिस्त्यागी सहनः प्रियभाषणः ।
शङ्काविहीनो मानी च देशकालविभागवित् ॥ ८६ ॥
दाक्ष्यचातुर्यमाधुर्यसौभाग्यादिभिरन्वितः ।
वेश्योपभोगरसिको यो भवेत् स तु वैशिकः ॥ ८७ ॥
कलकण्ठादिको लक्ष्यो भाणादावेव वैशिकः ।

१ 'र्थसू' क पाठः.

* मध्याह्ने जनशून्ये करिण्या भक्षितेषु कमलेषु ।
अविशेषज्ञ! कथमिव गतोऽसि शणवाटिकां द्रष्टुम् ॥

स त्रिधा कथ्यते ज्येष्ठमध्यनीचविभेदतः ॥ ८८ ॥

तेषां लक्षणानि भावप्रकाशिकायामुक्तानि । यथा—

“असङ्गोऽपि स्वभावेन मत्तवच्चेष्टते मुहुः ।
त्यागी स्वभावमधुरः समदुःखसुखः शुचिः ॥
कामतन्त्रेषु निपुणः क्रुद्धानुनयकोविदः ।
स्फुरिते चाधरे किञ्चिद् दयिताया विरज्यति ॥
उपचारपरो ह्येष उत्तमः कथ्यते बुधैः ।
व्यलीकमात्रे दृष्टे स्यान्न कुप्यति न रज्यति ॥
ददाति काले काले च भावं गृह्णाति भावतः ।
सर्वार्थैरपि मध्यस्थस्तामेवोपचरेत् पुनः ॥
दृष्टे दोषे विरज्येत स भवेन्मध्यमः पुमान् ।
कामतन्त्रेषु निर्लज्जः कर्कशो रतिकेलिषु ॥
अविज्ञातभयामर्षः कृत्याकृत्यविमूढधीः ।
मूर्खः प्रसक्तभावश्च विरक्तायामपि स्त्रियाम् ॥
मित्रैर्निवार्यमाणोऽपि पारुष्यं प्रापितोऽपि च ।
अन्यस्नेहपरावृत्तां सङ्क्रान्तरमणामपि ॥
स्त्रियं कामयते यस्तु सोऽधमः परिकीर्तितः ।”

इति ।

अथ शृङ्गारनेतॄणां साहाय्यकरणोचिताः ।
निरूप्यन्ते पीठमर्दविटचेटविदूषकाः ॥ ८९ ॥

तत्र पीठमर्दः—

१. कारणोक्ता' क. पाठ.

नायकानुचरो भक्तः किञ्चिदूनस्तु तद्गुणैः ।
पीठमर्द इति ख्यातः कुपितस्त्रीप्रसादकः ॥ ९० ॥
कामतन्त्रकलावेदी विट इत्यभिधीयते ।
सन्धानकुशलश्चेटः कलहंसादिको मतः ॥ ९१ ॥
विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः ।

अथ सहायगुणाः—

देशकालज्ञता भाषामाधुर्यं च विदग्धता ॥ ९२ ॥
प्रोत्साहने कुशलता यथोक्तकथनं तथा ।
निगूढमन्त्रतेत्याद्याः सहायानां गुणा मताः ॥ ९३ ॥

इति नायकप्रकरणम् ।

---

अथ नायिका निरूप्यन्ते —

नेतृसाधारणगुणैरुपेता नायिका मता ।
स्वकीया परकीया च सामान्या चेति सा त्रिधा ॥ ९४ ॥

तत्र स्वकीया —

सम्पत्काले विपत्काले या न मुञ्चति वल्लभम् ।
शीलार्जवगुणोपेता सा स्वीया कथिता बुधैः ॥ ९५ ॥

यथा —

*किं तादेण णरिन्दसेहरसिहालीढग्गपादेण मे
किं वा मे ससुरेण वासवमहासिंहासणद्धासिणा ।
ते देसा गिरिणो अ दे वणमही सच्चेअ मे वळ्ळहा
कोसळ्ळातणअस्स जत्थ चळणे वन्दामि णन्दामि अ ॥

---

* किं तातेन नरेन्द्रशेखरशिखालीढाग्रपादेन मे
किं वा मे श्वशुरेण वासवमहासिंहासनाध्यासिना ।
ते देशा गिरयश्च ते वनमही सैव च मे वल्लभाः
कौसल्यातनयस्य यत्र चरणौ वन्दे नन्दामि च ॥

सा च स्वीया त्रिधा मुग्धा मध्या प्रौढेति कथ्यते ।

तत्र मुग्धा—

मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि ॥ ९६ ॥

यतते रतचेष्टायां गूढं लज्जामनोहरम् ।

कृतापराधे दयिते वीक्षते रुदती सती ॥ ९७ ॥

अप्रियं वा प्रियं वापि न किञ्चिदपि भाषते ।

वयसा मुग्धा यथा ममैव—

उल्लोलितं हिमकरे निबिडान्धकार-
मुत्तेजितं विषमसायकबाणयुग्मम् ।
उन्मज्जितं कनककोरकयुग्ममस्या-
मुल्लासिता च गगने तनुवीचिरेखा ॥

नवकामा यथा ममैव—

बाला प्रसादनविधौ निदधाति चित्तं
दत्तादरा परिणये मणिपुत्रिकाणाम् ।
आलज्जते निजसखीजनमन्दहासै-
रालक्ष्यते तदिह भावनवावतारः ॥

रतौ वामत्वं यथा ममैव—

आलोक्य हारमणिबिम्बितमात्मनाथ-
मालिङ्गतीति सहसा परिवर्तमाना ।

१. 'गाढल' क. पाठ.

आलम्बिता करतले परिवेपमाना
सा सम्भ्रमात् सहचरीमवलम्बते स्म ॥

मृदुकोपत्वं यथा—

व्यावृत्तिक्रमणोद्यमेऽपि पदयोः प्रत्युद्गतौ वर्तनं
भ्रूभेदोऽपि तदीक्षणव्यसनिना व्यस्मारि मे चक्षुषा।
चाटूक्तानि करोति दग्धरसना रूक्षाक्षरेऽप्युद्यता
सख्यः! किं करवाणि मानसमये सञ्जातभेदो मम ॥

सव्रीडसुरतप्रयतनं यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वससरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता[2]श्लिष्टा शिवायास्तु वः ॥

क्रोधादभाषणा रुदती यथा ममैव—

कान्ते कृतागसि पुरः परिवर्तमाने
सख्यं सरोजशशिनोः सहसा बभूव।
रोषाक्षरं सुदृशि वक्तुमपारयन्त्या-
मिन्दीवरद्वयमवाप तुषारधाराम् ॥

अथ मध्या—

समानलज्जामदना प्रोद्यत्तारुण्यशालिनी ॥ ९८ ॥
मध्या कामयते कान्तं मोहान्तसुरतक्षमा।

अथ तुल्यलज्जास्मरत्वं यथा ममैव—

---

१. 'ष्ट', २. 'सहसा श्लि' क. पाठ

कान्ते पश्यति सानुरागमबला साचीकरोत्याननं
तस्मिन् कामकलाकलापकुशले व्यावृत्तवक्त्रे किल ।
पश्यन्ती मुहुरन्तरङ्गमदनं डोलायमानेक्षणा
लज्जामन्मथमध्यगापि नितरां तस्याभवत् प्रीतये ॥

प्रोद्यत्तारुण्यशालित्वं यथा ममैव—

नेत्राञ्चलेन ल[1]लिता वलिता च दृष्टिः
सख्यं करोति जघनं पुलिनेन साकम् ।
चक्रद्वयेन सदृशौ कुचकुड्मलौ च
नित्या विभाति नितरां मदनस्य लक्ष्मीः ॥

मोहान्तसुरतक्षमत्वं यथा ममैव—

आकीर्णघर्मजलमाकुलकेशपाश-
मामीलिताक्षियुगमादृतपारवश्यम् ।
आनन्दकन्दलितमस्तमितान्यभाव-
माशास्महे किमपि चेष्टितमायताक्ष्याः ॥

मध्या त्रिधा मानवृत्तेर्धीराधीरोभयात्मिका ॥ ९९ ॥

तत्र धीरा—

धीरा तु वक्ति वक्रोक्त्या सोत्प्रासं सागसं प्रियम् ।

यथा ममैव—

को दोषो मणिमालिका यदि भवेत् कण्ठे न किं शङ्करो
धत्ते भूषणमर्धचन्द्रममलं चन्द्रे न किं कालिमा ।

१. 'ल' क. ख. पाठ..

तत् साध्वेव कृतं कृतं भणितिभिर्नैवापराद्धं त्वया
भाग्यं द्रष्टुमनीशयैव भवतः कान्तापराद्धं मया ॥

अथाधीरा—

अधीरा परुषैर्वाक्यैः खेदयेद् वल्लभं रुषा ।

यथा ममैव—

निश्शङ्कमागतमवेक्ष्य कृतापराधं
काचिन्नितान्तपरुषं विनिवृत्तवक्त्रा ।
किं प्रार्थनाभिरधिकं सुखमेधि याहि
याहीति खिन्नमकरोदसकृद् ब्रुवाणा ॥

अथ धीराधीरा—

धीराधीरा तु वक्रोक्त्या सबाष्पं वदति प्रियम् ॥ १०० ॥

यथा ममैव—

आश्लेषोल्लसिताशयेन दयिताप्यार्द्रा त्वया चुम्बिता
चित्रोक्तिश्रवणोत्सुकेन कलिता तस्यां निशायां कथा ।
तद्युक्तं दिवसागमेऽत्र जडता कार्श्यं कलाहीनता
राजन्नित्युदिताश्रुगद्गदकथं काचिद् ब्रवीति प्रियम् ॥

अथ प्रगल्भा—

सम्पूर्णयौवनोन्मत्ता प्रगल्भा रूढमन्मथा ।
दयिताङ्गे विलीनेव यतते रतिकेलिषु ॥ १०१ ॥
रतप्रारम्भमात्रेऽपि[1] गच्छत्यानन्दमूर्छनाम् ।

सम्पूर्णयौवनत्वं यथा ममैव—

---

१. 'ण' क. पाठ.

उत्तुङ्गौ कुचकुम्भौ रम्भास्तम्भोपमानमूरुयुगम् ।
तरले दृशौ च तस्याः सृजता धात्रा किमाहितं सुकृतम् ॥

रूढमन्मथत्वं यथा——

निःश्वासोल्लसदुन्नतस्तनतटं निर्दष्टबिम्बाधरं
निर्मृष्टाङ्गविलेपनैश्च करणैश्चित्रे प्रवृत्ते रते ।
काञ्चीदाम विभिन्नमङ्गदयुगं भग्नं तथापि प्रियं
सम्प्रोत्साहयति स्म सा विदधती हस्तं क्वणत्कङ्कणम् ॥

मानवृत्तेः प्रगल्भापि त्रिधा धीरादिभेदतः ॥ १०२ ॥

तत्र धीरप्रगल्भा——

उदास्ते सुरते धीरा सावहित्था च सादरा ।

यथा——

न प्रत्युद्गमनं करोति रशनाव्यासञ्जनादिच्छला-
न्नादत्ते नवमञ्जरीमलिभयव्याजेन दत्तामपि ।
धत्ते[1] दर्पणमादरेण न गिरं रूक्षाक्षरं मानिनी
चातुर्याद्[2] विदधाति मानमथवा व्यक्तीकरोति प्रिया ॥

अथाधीरप्रगल्भा——

सन्तर्ज्य निष्ठुरं रोषादधीरा ताडयेत् प्रियम् ॥ १०३ ॥

यथा ममैव——

कान्ते सागसि काचिदन्तिकगते निर्भर्त्स्य रोषारुणै-
र्भ्रूभङ्गीकुटिलैरपाङ्गवलनैरालोकमाना मुहुः ।
बद्ध्वा मेखलया सपत्नरमणीपादाब्जलाक्षाङ्कितं
लीलानीलसरोरुहेण निटिलं हन्ति स्म रोषाकुला ॥

---

१. 'द' ग घ. ङ., २. 'वि' ग पाठ..

अथ धीराधीरप्रगल्भा —

धीराधीरगुणोपेता धीराधीरेति कथ्यते ।

यथा ममैव —

प्रत्यासीदति सागसि प्रियतमे सा सम्भ्रमादुत्थिता
वैयात्यात् पुरतः स्थिते सति पुनर्मानावधूताशया ।
रात्रौ क्वासि न चेदियं[1] मणिमयी माला कुतस्ते वदे-
त्युक्त्वा मेखलया हतेन सहसाश्लिष्टा सबाष्पं स्थिता ॥

द्वेधा ज्येष्ठा कनिष्ठेति मध्या प्रौढापि तादृशी ॥ १०४ ॥

उभे अपि यथा —

एकत्रासनसङ्गते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
[2]ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

अत्रेतरस्यां पश्यन्त्यामपि सम्भावनार्हतया पिहितलोचनाया ज्येष्ठत्वम् । तत्र समक्षं सम्भावनानर्हत्वात् चुम्बितायाः कनीयस्त्वम् । एवमितरदप्युदाहार्यम् ।

धीराधीरादिभेदेन मध्याप्रौढे त्रिधा त्रिधा ।
ज्येष्ठाकनिष्ठाभेदेन ताः प्रत्येकं द्विधा द्विधा ॥ १०५ ॥
मुग्धा त्वेकविधा चैवं सा त्रयोदशधोदिता ।

अथ परकीया —

अन्यापि द्विविधा कन्या परोढा चेति भेदतः ॥ १०६ ॥

---

१. 'क्वचिन्मणि', २ 'तिर्यग्वक्रि' क. पाठः,

तत्र कन्यात्वनूढा स्यात् सलज्जा पितृपालिता ।
सखीकेलिषु विस्रब्धा प्रायो मुग्धागुणान्विता ॥ १०७ ॥

यथा —

तां नारदः कामचरः कदाचित्
कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं
प्रेम्णा शरीरार्धहरां हरस्य ॥

प्रधानमप्रधानं वा नाटकादावियं भवेत् ।
मालतीमाधवे लक्ष्ये मालतीमदयन्तिके ॥ १०८ ॥

अथ परोढा —

परोढा तु परेणोढाप्यन्यसम्भोगलालसा ।
लक्ष्या क्षुद्रप्रबन्धे सा सप्तशत्यादिके बुधैः[1] ॥ १०९ ॥

अथ सामान्या —

साधारणस्त्री गणिका कलाप्रागल्भ्यधाष्टर्ययुक् ।

यथा —

गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
सन्दष्टाधरमुक्तसीत्कृतमतिभ्राम्यद्भ्रु नृत्यत्करम् ।
चाटुप्रायवचोविचित्रमणितैर्यातै रुतैश्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥

---

१. 'धैः ।

भर्ता निश्वसितेऽप्यसूयति मनोजिघ्र. सपत्नीजन.
श्वश्रूरिङ्गितदैवत नगनयोरीहालिहो यातर. ।
तद् दूरादयमञ्जलि· किममुना दृग्भङ्गिपातेन ते
वैदग्धीरचनाप्रपञ्चरसिक ! व्यर्थोऽयमत्र श्रम ॥

अ' क. पाठ..

एषा स्याद् द्विविधा रक्ता विरक्ता चेति[1] भेदतः ॥ ११० ॥
तत्र रक्ता तु वर्ण्या स्यादप्राधान्येन नाटके ।
अग्निमित्रस्य विज्ञेया यथा राज्ञ इरावती ॥ १११ ॥
प्रधानमप्रधानं वा नाटकेतररूपके ।
सा चेद् दिव्या नाटके तु प्राधान्येनैव वर्ण्यते ॥ ११२ ॥

यथा—

आ दर्शनात् प्रविष्टा सा मे सुरलोकसुन्दरी हृदयम् ।
बाणेन मकरकेतोः कृतमार्गमवन्ध्यपातेन ॥

विरक्ता तु प्रहसनप्रकृतिष्वेव वर्ण्यते ।
तस्या धौर्त्यप्रभृतयो गुणास्तदुपयोगिनः ॥ ११३ ॥

छन्नकामान् रतार्थाज्ञान् बालपाषण्डषण्डकान् ।
रक्तेव रञ्जयेदिभ्यान्निःस्वान् मात्रा विवासयेत् ॥ ११४ ॥

छन्नकामाः श्रोत्रियादयः । रतार्थी रतिसुखप्रयोजनाः । अज्ञाः मूढाः । शेषाः प्रसिद्धाः । अत्र केचिदाहुः—

"गणिकाया नानुरागो गुणवत्यपि नायके ।
रसाभासप्रसङ्गः स्यादरक्तायाश्च वर्णने ॥ ११५ ॥
अतश्च नाटकादौ तु वर्ण्या सा न भवेदिति ।"

तथा चाहुः—

"सामान्यवनिता वेश्या सा द्रव्यं परमिच्छति ।
गुणहीने न च द्वेषो नानुरागो गुणिन्यपि ॥

१. 'नानि । अ' ड. पाठः.

शृङ्गाराभास एतत् स्यान्न शृङ्गारः कदाचन ।”

इति ।

तन्मतं नानुमनुते धीमान् श्रीशिङ्गभूपतिः ॥ ११६ ॥

भावानुबन्धाभावेन नायिकात्वपराहतेः ।

तस्याः प्रकरणादौ च नायिकात्वविधानतः ॥ ११७ ॥

अनायिकावर्णने तु रसाभासप्रसङ्गतः ।

तथा प्रकरणादीनामरसाश्रयतागतेः ॥ ११८ ॥

रसाश्रयं तु दशधेत्यादिशास्त्रविरोधतः ।

तस्मात् साधारणस्त्रीणां गुणशालिनि नायके ॥ ११९ ॥

भावानुबन्धः स्यादेव रुद्रटस्यापि भाषणात् ।

तथाह रुद्रटः—

“ईर्ष्या कुलस्त्रीषु न नायकस्य निश्शङ्ककेलिर्न पराङ्गनासु ।
वेश्यासु चैतद् द्वितयं प्ररूढं सर्वस्वमेतास्तदहो स्मरस्य ॥”

इति ।

उदात्तादिभिदां केचित् सर्वासामपि मन्वते ॥ १२० ॥

तास्तु प्रायेण दृश्यन्ते सर्वत्र व्यवहारतः ।

अथासामष्टावस्थाः—

प्रथमं प्रोषितपतिका वासकसज्जा ततश्च विरहोत्का ॥ १२१ ॥

अथ खण्डिता मता स्यात् कलहान्तरिताभिसारिका चैव ।

कथिता च विप्रलब्धा स्वाधीनपतिस्तथाचान्या ॥ १२२ ॥

शृङ्गारकृतावस्थाभेदात् ताश्चाष्टधा भिन्नाः ।

तत्र प्रोषितपतिका —

दूरदेशं गते कान्ते भवेत् प्रोषितभर्तृका ॥ १२३ ॥
अस्यास्तु जागरः कार्श्यं निमित्तादिविलोकनम् ।
मालिन्यमनवस्थानं प्रायः शय्यानिषेवणम् ॥ १२४ ॥
जाड्यचिन्ताप्रभृतयो विक्रियाः कथिता बुधैः ।

यथा ममैव—

दूरे तिष्ठति सोऽधुना प्रियतमः प्राप्तो वसन्तोत्सवः
कष्टं कोकिलकूजितानि सहसा जातानि दम्भोलयः ।
अङ्गान्यप्यवशानि याचितकतां यातीव मे चेतना
हा कष्टं मम दुष्कृतस्य महिमा चन्द्रोऽपि चण्डायते ॥

अथ वासकसज्जिका—

भरताद्यैरभिदधे स्त्रीणां वारस्तु वासकः ॥ १२५ ॥
स्ववासकगते कान्ते समेष्यति गृहान्तिकम् ॥
सज्जीकरोति चात्मानं या सा वासकसज्जिका ॥ १२६ ॥
अस्यास्तु चेष्टाः सम्पर्कमनोरथविचिन्तनम् ।
सखीविनोदो हृल्लेखो मुहुर्दूतीनिरीक्षणम् ॥ १२७ ॥
प्रियाऽभिगममार्गाभिवीक्षाप्रभृतयो मताः ।

यथा ममैव —

केलीगेहं ललितशयनं भूषितं चात्मगेहं
दर्शं दर्शं दयितपदवीं सादरं वीक्षमाणा ।
भावक्रीडां मनसि विविधां भाविनीं कल्पयन्ती
सारङ्गाक्षी रणरणिकया निःश्वसन्ती समास्ते ॥

अथ विरहोत्कण्ठिता —

अनागसि प्रियतमे चिरयत्युत्सुका तु या ॥ १२८ ॥
विरहोत्कण्ठिता भाववेदिभिः सा समीरिता ।
अस्यास्तु चेष्टा हृत्तापो वेपथुश्चाङ्गसादनम् ॥ १२९ ॥
अरतिर्बाष्पमोक्षश्च स्वावस्थाकथनादयः ।

यथा ममैव —

चिरयति मनाक् कान्ते कान्ता निरागसि सोत्सुका
मधु मलयजं माकन्दं वा निरीक्षितुमक्षमा ।
गलितपतितं नो जानीते करादपि कङ्कणं
परभृतरुतं श्रुत्वा बाष्पं विमुञ्चति वेपते ॥

अथ खण्डिता —

उल्लङ्घ्य समयं यस्याः प्रेयानन्योपभोगवान् ॥ १३० ॥
भोगलक्ष्माङ्कितः प्रातरागच्छेत् सा हि खण्डिता ।
अस्यास्तु चिन्ता निःश्वासस्तूष्णीम्भावोऽश्रुमोचनम् ॥ १३१ ॥
खेदभ्रान्त्यस्फुटालापा इत्याद्या विक्रिया मताः ।

यथा ममैव —

प्रभाते प्राणेशं नवमदनमुद्राङ्किततनुं
वधूर्दृष्ट्वा रोषात् किमपि कुटिलं जल्पति मुहुः ।
मुहुर्धत्ते चिन्तां मुहुरपि परिभ्राम्यति मुहु-
र्विधत्ते निःश्वासं मुहुरपि च बाष्पं विसृजति ॥

अथ कलहान्तरिता —

या सखीनां पुरः पादपतितं वल्लभं रुषा ॥ १३२ ॥
निरस्य पश्चात् तपति कलहान्तरिता तु सा ।

अस्यास्तु भ्रान्तिसन्तापौ मोहो निःश्वसितं ज्वरः ॥ १३३ ॥
मुहुः प्रलाप इत्याद्या इष्टाश्चेष्टा मनीषिभिः ।

यथा ममैव —

निश्शङ्का नितरां निरस्य दयितं पादानतं प्रेयसी
कोपेनाद्य कृतं मया किमिदमित्यार्ता सखीं जल्पति।
सोद्वेगं भ्रमति क्षिपत्यनुदिशं दृष्टिं विलोलाकुलां
रम्यं द्वेष्टि मुहुर्मुहुः प्रलपति श्वासाधिकं मूर्छति ॥

अथाभिसारिका —

मदनानलसन्तप्ता याभिसारयति प्रियम् ॥ १३४ ॥
ज्योत्स्नातमस्विनीयानयोग्याम्बरविभूषणा ।
स्वयं वाभिसरेद् या तु सा भवेदभिसारिका ॥ १३५ ॥
अस्याः सन्तापचिन्ताद्या विक्रियास्तु यथोचितम् ।
कान्ताभिसरणे स्वीया लज्जानाशादिशङ्कया ॥ १३६ ॥
व्याघ्रहुङ्कारसन्त्रस्तमृगशावविलोचना ।
नील्यादिरक्तवसनारचिताङ्गावगुण्ठना ॥ १३७ ॥
स्वाङ्गे विलीनावयवा निश्शब्दपदचारिणी ।
सुस्निग्धैकसखीमात्रयुक्ता याति समुत्सुका ॥ १३८ ॥
एषा प्रिये तु निद्राणे पार्श्वे तिष्ठति निश्चला ।
गर्वातिरेकनिभृता शीतैः स्रग्दामचन्दनैः ॥ १३९ ॥
भावमाबोधयत्येनं तद्भावावेक्षणोत्सुका ।

यथा —

तमःसवर्णं विदधे विभूषणं
निनाददोषेण नुनोद नूपुरम् ।

प्रतीक्षितुं न स्फुटचन्द्रिकाभया-
दियेष दूतीमभिसारिकाजनः ॥

यथा वा—

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥
स्वीयावत् कन्यका ज्ञेया कान्ताभिसरणक्रमे ॥ १४० ॥
वेश्याभिसारिका त्वेति हृष्टा वैशिकनायकम् ।
आविर्भूतस्मितमुखी मदघूर्णितलोचना ॥ १४१ ॥
अनुलिप्ताखिलाङ्गी च विचित्राभरणान्विता ।
स्नेहाङ्कुरितरोमाञ्चस्फुटीभूतमनोभवा ॥ १४२ ॥
संवेष्टिता परिजनैर्भोगोपकरणान्वितैः ।
रशनारावमाधुर्यदीपितानङ्गवैभवा ॥ १४३ ॥
चरणाम्बुजसंलग्नमणिमञ्जीरमञ्जुला ।
एषा च मृदुसंस्पर्शैः केशकण्डूयनादिभिः ॥ १४४ ॥
प्रबोधयति तद्बोधे प्रणयात् कुपितेक्षणा ।

यथा —

मासि मधौ चन्द्रातपधवलायां निशि सखीजनालापैः ।
मदनातुराभिसरति प्रणयवती यं स एव खलु धन्यः ॥

अथ प्रेष्याभिसारिका—

बाहुविक्षेपलुलितस्रस्तधम्मिल्लमाल्लिका ॥ १४५ ॥
चकितभ्रूविकारादिविलासललितेक्षणा ।
मैरेयाविरतास्वादमदस्खलितजल्पिता ॥ १४६ ॥
प्रेष्याभियाति दयितं चेटीभिः सह गर्विता ।

प्रियं कङ्कणनिक्काणमञ्जुव्यजनवीजनैः ॥ १४७ ॥
विबोध्य निर्भर्त्सयति नासाभङ्गपुरस्सरम् ।

यथा —

स्रस्तस्रक्कबरीभरं सुललितव्यावृत्ति हालामदै-
रव्यक्ताक्षरजल्पितं प्रतिपदं विक्षिप्तबाहालतम् ।
सङ्केतालयमेत्य कङ्कणरवैरुद्बोध्य सुप्तं प्रियं
प्रेष्या प्रेमवशात् तनोति निटिलभ्रूवल्लिसन्तर्जनम् ॥

अथ विप्रलब्धा—

कृत्वा सङ्केतमप्राप्ते दयिते व्यथिता तु या ॥ १४८ ॥
विप्रलब्धेति सा प्रोक्ता बुधैरस्यास्तु विक्रिया ।
निर्वेदचिन्ताखेदाश्रुमूर्छानिःश्वसितादयः ॥ १४९ ॥

यथा ममैव —

चन्द्रबिम्बमुदयाद्रिमागतं
पश्य[1] तेन सखि! वञ्चिता वयम् ।
अत्र किं निजगृहं नयस्व मां
तत्र वा किमिति विव्यथे वधूः ॥

अथ स्वाधीनपतिका—

स्वायत्तासन्नदयिता हृष्टा स्वाधीनवल्लभा।
अस्यास्तु चेष्टा कथिता स्मरपूजामहोत्सवः ॥ १५० ।
पानकेलिजलक्रीडाकुसुमापचयादयः।

यथा ममैव —

---

१. 'वञ्चकेन' क. पाठ.

सलीलं धम्मिल्ले दरहसितकल्हाररचनां
कपोले सोत्कम्पं मृगमदमयं[1] पत्र[2]तिलकम् ।
कुचाभोगे कुर्वन् [3]ललितमकरीं कुङ्कुममयीं
युवा धन्यः सोऽयं मदयति च नित्यं प्रियतमाम् ॥

उत्तमा मध्यमा नीचेत्येवं सर्वाः स्त्रियस्त्रिधा ॥ १५१ ॥

अत्रोत्तमा —

अभिजातैर्भोगतृप्तैर्गुणिभिर्या च काम्यते ।
गृह्णाति कारणे कोपमनुनीता प्रसीदति ॥ १५२ ॥

विदधत्यप्रियं पत्यौ स्वयमाचरति प्रियम् ।
वल्लभे सापराधेऽपि तूष्णीं तिष्ठति सोत्तमा ॥ १५३ ॥

अथ मध्यमा —

पुंसः स्वयं कामयते काम्यते या च तैर्वधूः ।
सक्रोधे क्रुध्यति मुहुः सानृतेऽनृतवादिनी ॥ १५४ ॥

सापकारेऽपकर्त्री स्यात् स्निग्धे स्निह्यति वल्लभे ।
एवमादिगुणोपेता मध्यमा सा प्रकीर्तिता ॥ १५५ ॥

अथ नीचा —

अकस्मात् कुप्यति रुषं प्रार्थितापि[4] न मुञ्चति ।
सुरूपं वा कुरूपं वा गुणवन्तमथागुणम् ॥ १५६ ॥

---

१. 'यीं', २. 'लतिकाम्', ३. 'नवमकरिकां कु', ४. 'भिर्न मु' क. पाठः.

स्थविरं तरुणं वापि या वा कामयते मुहुः ।
ईर्ष्याकोपविषादेषु नियता साधमा स्मृता ॥ १५७ ॥

आसामुदाहरणानि लोकत एवावगन्तव्यानि ।

स्वीया त्रयोदशविधा द्विविधा च वराङ्गना ।
वैशिकैवं षोडशधा ताश्चावस्थाभिरष्टभिः ॥ १५८ ॥

एकैकमष्टधा तासामुत्तमादिप्रभेदतः ।
त्रैविध्यमेवं सचतुरशीतिस्त्रिशती भवेत् ॥ १५९ ॥

अवस्थात्रयमेवेति केचिदाहुः परस्त्रियाः ।

यथा—

"त्र्यवस्थैव परस्त्री स्यात् प्रथमं विरहोन्मनाः ।
ततोऽभिसारिका भूत्वाभिसरन्ती व्रजेत् स्वयम् ॥
सङ्केताच्च परिभ्रष्टा विप्रलब्धा भवेत् पुनः ।
पराधीनपतित्वेन नान्यावस्थात्र सङ्गता ॥"

इति ।

अथ नायिकासहायाः—

आसां दूत्यः सखी चेटी लिङ्गिनी प्रतिवेशिनी ॥ १६० ॥

धात्रेयी शिल्पकारी च कुमारी कथिनी तथा ।
कारुर्विप्राश्निका चेति नेतृमित्रगुणान्विताः ॥ १६१ ॥

लिङ्गिनी पण्डितकौशिक्यादिः । प्रतिवेशिनी समीपगृहवर्तिनी । शिल्पकारी वीणावादनादिनिपुणा । कारू रजक्यादिः । विप्राश्निका दैवज्ञा । शेषाः प्रसिद्धाः । इतरर-

सालम्बनानामनतिनिरूपणीयतया पृथक्प्रकरणारम्भस्यानु[1]-पयोगात्[2] तत्तद्रसप्रसङ्ग एव निरूपणं करिष्यामः ॥

इति नायिकाप्रकरणम् ॥

अथ श्रृङ्गारस्योद्दीपनविभावः —

उद्दीपनं चतुर्धा स्यादालम्बनसमाश्रयम् ।
गुणचेष्टालङ्कृतयस्तटस्थाश्चेति भेदतः ॥ १६२ ॥

तत्र गुणाः —

यौवनं रूपलावण्ये सौन्दर्यमभिरूपता ।
मार्दवं सौकुमार्यं चेत्यालम्बनगता गुणाः ॥ १६३ ॥

तत्र यौवनं —

सर्वासामपि नारीणां यौवनं तु चतुर्विधम् ।
प्रतियौवनमेतासां चेष्टितानि पृथक् पृथक्[3] ॥ १६४ ॥

तत्र प्रथमयौवनम् —

ईषच्चपलनेत्रान्तं स्मरस्मेरमुखाम्बुजम् ।
सगर्वजरजोगण्डमसमग्रारुणाधरम् ॥ १६५ ॥
लावण्योद्भेदरम्याङ्गं विलसद्भावसौरभम् ।
उन्मीलिताङ्कुरकुचमस्फुटाङ्गकसन्धिकम् ॥ १६६ ॥
प्रथमं यौवनं तत्र वर्तमाना मृगेक्षणा ।
अपेक्षते मृदुस्पर्शं सहते नोद्धतां रतिम् ॥ १६७ ॥

---

१. 'लम्बनस्या', २ 'गित्वात्' क. पाठः. ३. 'क् । ई' ग. घ. ङ. पाठः.

सखीकेलिरता स्वाङ्गसंस्कारकलितादरा ।
न कोपहर्षौ भजते सपत्नीदर्शनादिषु ॥ १६८ ॥
नातिरज्यति कान्तस्य सङ्गमे किन्तु रज्यति ।

यथा—

विस्तारी स्तनभार एष गमितो न स्वोचितामुन्नतिं
रेखोद्भासि तथा वलित्रयमिदं न स्पष्टनिम्नोन्नतम् ।
मध्येऽस्या ऋजुरायतार्धकपिशा रोमावली दृश्यते
रम्यं शैशवयौवनव्यतिकरोन्मिश्रं वपुर्वर्तते ॥

अस्याश्चेष्टा यथा ममैव—

आविर्भवत्प्रथमदर्शनसाध्वसानि
सावज्ञमादृतसखीजनजल्पितानि ।
सव्याजकोपमधुराणि गिरेः सुताया
वः पान्तु नूतनसमागमचेष्टितानि ॥

अथ द्वितीययौवनं—

स्तनौ पीनौ तनुर्मध्यः पाणिपादस्य रक्तिमा ॥ १६९ ॥
ऊरू करिकराकारावङ्गं व्यक्ताङ्गसन्धिकम् ।
नितम्बो विपुलो नाभिर्गभीरा जघनं घनम् ॥ १७० ॥
व्यक्ता रोमावली स्नैग्ध्यमङ्गकेशरदाक्षिणि ।
द्वितीययौवने तेन कलिता वामलोचना ॥ १७१ ॥

---

१. 'लज्यति' ग. घ. ङ. पाठः.

सखीषु स्वाशयज्ञासु स्निग्धा प्रायेण मानिनी ।
न प्रसीदत्यनुनये सपत्नीष्वभ्यसूयिनी ॥ १७२ ॥
नापराधान् विषहते प्रणयेर्ष्याकषायिता ।
रतिकेलिष्व[1]निभृता चेष्टते गर्विता रहः ॥ १७३ ॥

यथा —

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥

अथ तृतीययौवनम् —

अस्निग्धता नयनयोर्गण्डयोर्म्लानकान्तिता ।
विच्छायता खरस्पर्शोऽप्यङ्गानां श्लथता मनाक् ॥
अधरे मसृणो रागस्तृतीये यौवने भवेत् ।
तत्र स्त्रीणामियं चेष्टा रतितन्त्रविदग्धता ॥ १७५ ॥
वल्लभस्यापरित्यागस्तदाकर्षणकौशलम् ।
अनादरोऽपराधेषु सपत्नीष्वप्यमत्सरः[2] ॥ १७६ ॥

यथा आनन्दकोशप्रहसने —

वक्त्रैः प्रयत्नविकचैर्वलिभैश्च गण्डै-
र्मध्यैश्च मांसलतरैः शिथिलैरुरोजैः ।
घण्टापथे रतिपतेरपि नूनमेता
वृन्तश्लथानि कुसुमानि विडम्बयन्ति ॥

---

१ 'भिरता' क. पाठः. २. 'र' । सपत्नीष्वानुकूल्यं च कान्तेनाविरहस्थितिः । च' क. पाठः.

अथ चतुर्थयौवनं —

जर्जरत्वं स्तनश्रोणिगण्डोरुजघनादिषु ।
निर्मांसता च भवति चतुर्थे यौवने स्त्रियाः ॥ १७७ ॥
तत्र चेष्टा रतिविधावनुत्साहोऽसमर्थता[1] ।
सपत्नीष्वानुकूल्यं च कान्तेनाविरहस्थितिः ॥ १७८ ॥

यथा [2]आनन्दकोशप्रहसने —

क्षामैश्च गण्डफलकैर्विरलैश्च दन्तै-
र्लम्बैः कुचैर्गतकथाप्रचुरैः प्रसङ्गैः ।
अङ्गैरयत्नशिथिलैश्च सदाप्यसेव्या
[3]भर्तुः पणानभिलषन्त्यहहा[4]लसाङ्ग्यः ॥

तत्र शृङ्गारयोग्यत्वं रताह्लादनकारणम् ।
आद्यद्वितीययोरेव न तृतीयचतुर्थयोः ॥ १७९ ॥

अथ रूपम् —

अङ्गान्यभूषितान्येव प्रक्षेपाद्यैर्विभूषणैः ।
येन भूषितवद् भान्ति तद् रूपमिति कथ्यते ॥ १८० ॥

यथा —

स्नातुं विमुक्ताभरणा विमाल्या भूयोऽसहा भूषयितुं शरीरम् ।
अगाद् बहिः काचिदुदाररूपा यां वीक्ष्य लज्जां दधिरे सभूषाः ॥

अथ लावण्यं —

मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते ॥ १८१ ॥

---

१. 'ता । य', २. 'शृङ्गारकोशे— श्यामै' क. पाठ.. ३. 'हर्तुं प', ४. 'नताङ्ग्यः' ग. घ. पाठ..

यथा —

अङ्गेषु स्फटिकादर्शदर्शनीयेषु जृम्भते ।
अमला कोमला कान्तिर्ज्योत्स्नेव प्रतिबिम्बिता ॥

अथ सौन्दर्यम् —

अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम् ।
सुश्लिष्टः सन्धिभेदः स्यात् तत् सौन्दर्यमुदीर्यते ॥ १८२ ॥

यथा —

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥

अथाभिरूपता —

यदात्मीयगुणोत्कर्षैर्वस्त्वन्यन्निकटस्थितम् ।
सारूप्यं नयति प्राज्ञैराभिरूप्यं तदुच्यते ॥ १८३ ॥

यथा —

एकोऽपि त्रय इव भाति कन्दुकोऽयं
कान्तायाः करतलरागरक्तरक्तः ।
भूमौ तच्चरणनखांशुगौरगौरः
खस्थः सन् नयनमरीचिनीलनीलः ॥

अथ मार्दवं —

स्पृष्टं यच्चाङ्गमस्पृष्टमिव स्यान्मार्दवं हि तत् ।

यथा—

याभ्यां दुकूलान्तरलक्षिताभ्यां
विस्रंसते स्नैग्ध्यगुणेन दृष्टिः ।

निर्माणकालेऽपि ततस्तदूर्वोः
संस्पर्शशङ्का न विधेः कराभ्याम् ॥

अत्र अमूर्तापि दृष्टिर्विस्रंसते मूर्तौ करौ किमुतेति श्लक्ष्णत्वातिशयकथनान्मार्दवम् ।

अथ सौकुमार्यं —

या स्पर्शासहताङ्गेषु कोमलस्यापि वस्तुनः ॥ १८४ ॥
तत् सौकुमार्यं त्रेधा स्यान्मुख्यमध्याधमक्रमात् ।

अथोत्तमसौकुमार्यम् —

अङ्गं पुष्पादिसंस्पर्शासहं येन तदुत्तमम् ॥ १८५ ॥

यथा —

महार्हशय्यापरिवर्तनच्युतैः
स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिल एव केवले ॥

अत्र यद्यप्युत्तरार्धे स्थण्डिलस्पर्शसहत्वमुक्तं,[1] तथापि तेन स्थिराग्रहस्यैव मनसः क्लेशसहिष्णुत्वं प्रतीयते, न पुनः शरीरस्येत्यत्रोत्तमसौकुमार्यमुपपद्यते ।

अथ मध्यमसौकुमार्यं —

न सहेत करस्पर्शं येनाङ्गं मध्यमं हि तत् ।

---

१. 'पि स्थि' क. पाठः.

यथा —

लाक्षां विधातुमवलम्बितमात्रमेव
सख्याः करेण तरुणाम्बुजकोमलेन ।
कस्याश्चिदग्रपदमाशु बभूव रक्तं
लाक्षारसः पुनरभून्न तु भूषणाय ॥

अथाधमसौकुमार्यं —

येनाङ्गमातपादीनामसहं तदिहाधमम् ॥ १८६ ॥

यथा —

आमोदमामोदनमादधानं निलीननीलालकचञ्चरीकम् ।
पद्मालयाया मुखपद्ममस्या निरूढरागं कृतमातपेन ॥

तच्चेष्टा लीलाविलासादयः । तेऽप्यनुभावप्रकरणे वक्ष्यन्ते । अथालङ्कृतिः —

चतुर्धालङ्कृतिर्वासोभूषामाल्यानुलेपनैः ।

तत्र वस्त्रालङ्कारो यथा—

क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥

भूषालङ्कारो यथा —

सा सम्भवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद् विहङ्गैरिव लीयमानैरामुच्यमानाभरणा चकाशे ॥

माल्यानुलेपनालङ्कारो यथा —

---

१. 'र' क. पाठ..

आलोलैरनुमीयते मधुकरैः केशेषु माल्यग्रहः
कान्तिः कापि कपोलयोः प्रथयते ताम्बूलमन्तर्गतम् ।
अङ्गानामवगम्यते[1] परिमलैरालेपनप्रक्रिया
वेषः कोऽपि विदग्ध एष सुदृशः सूते सुखं चक्षुषोः ॥

**अथ तटस्थाः —**

तटस्थाश्चन्द्रिका धारागृहचन्द्रोदयावपि ॥ १८७ ॥
कोकिलालापमाकन्दमन्दमारुतषट्पदाः ।
लतामण्डपभूगेहदीर्घिकाजलदारवाः ॥ १८८ ॥
प्रासादगर्भसङ्गीतक्रीडाद्रिसरिदादयः ।
एवमूह्या यथाकालमुपभोगोपयोगिनः ॥ १८९ ॥

तत्र चन्द्रिकाया उद्दीपनत्वं यथा —

दुरासदे चन्द्रिकया सखीजनै-
र्लतानिकुञ्जे ललना निगूहिता ।
चकोरचञ्चुच्युतचन्द्रिकाकणं
कुतोऽपि दृष्ट्वा भजति स्म मूर्छनाम् ॥

धारागृहस्य यथा —

सा चन्द्रकान्तामपि चन्द्रकान्त-
वेदीमधिष्ठातुमपारयन्ती ।
धारागृहं प्राप्य तदप्यनङ्ग-
घोरासिधारागृहमन्वमंस्त ॥

चन्द्रोदयस्य यथा —

---

१. 'नुमीयते' क. पाठः.

चन्द्रबिम्बमुदयाद्रिमागतं वञ्चकेन सखि! वञ्चिता वयम् ।
अत्र किं निजगृहं नयस्व मां तत्र वा किमिति विव्यथे वधूः ॥

कोकिलालापस्य यथा —

चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज ।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥

माकन्दस्य यथा —

चिरलालित एष बालचूतः[1] स्वकरावर्जितकुम्भवारिसेकैः ।
कुसुमायुधसायकान् प्रसूते पयसा पन्नगवर्धनं तदेतत् ॥

माकन्द इत्यशोकानामप्युपलक्षणम् ।

मन्दमारुतस्य यथा —

भृशं निपीतो भुजगाङ्गनाभिर्विनिर्गतस्तद्दरलेन साकम् ।
तदन्यथा चेत् कथमक्षिणोत् तामदक्षिणो दक्षिणमातरिश्वा[2] ॥

षट्पदस्वरूपस्य यथा —

मधुव्रतानां मदमन्थराणां[3] मन्त्रैरपूर्वैरिव मञ्जुनादैः ।
मधुश्रियो मानवतीजनानां मानग्रहोच्चाटनमाचरन्ति ॥

लतामण्डपस्य यथा —

एषा पूगवती प्रफुल्लकुहलिः[4] पर्यन्तचूतद्रुमा
तन्मध्येऽपि सरोवरं निधुवनान्तानन्दमन्दानिलम् ।
तत्तीरे कदलीगृहं विलसितं तस्यान्तरे मल्लिका-
वल्लीमण्डपमत्र सा सुनयना त्वन्मार्गमेवेक्षते ॥

---

१. 'चूतपोतः', २. 'गन्धवाहक॥', ३. 'धु' क. पाठः, ४. 'ल्त' ग. घ. पाठः.

भूगेहस्य यथा—

काल़ागरूद्गारसुगन्धिगन्धधूपाधिवासाश्रयभूगृहेषु ।
न तत्रसुर्माघसमीरणेभ्यः श्यामाकुचोष्माश्रयिणः पुमांसः ॥

दीर्घिकाया यथा—

एतस्मिन् मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
सन्दृष्टाः कुवलयिनो मया विभागाः ॥

जलदारवस्य यथा—

मनस्विनीनां मनसोऽपि मानस्तथापनीतो घनगर्जितेन ।
यथोपगूढाः प्रथितागसोऽपि क्षणं विदग्धाः कुपिता इवासन् ॥

अत्र जलदारवग्रहणं विद्युदादीनामप्युपलक्षणम् । विद्युतो यथा—

वर्षासु तासु क्षणरुक्प्रकाशात्
त्रस्ता रमा शार्ङ्गिणमालिलिङ्ग ।
विद्युच्च सा वीक्ष्य तदङ्गशोभां
ह्रीणेव तूर्णं जलदं जगाहे ॥

प्रासादगर्भस्य यथा—

गोपानसीसंश्रितबर्हिणेषु कपोतशिञ्जानकपोतकेषु ।
प्रासादगर्भेषु रमाद्वितीयो रेमे पयोदानिलदुर्गमेषु ॥

सङ्गीतस्य यथा—

माधवो मधुरमाधवीलतामण्डपे पटुरटन्मधुव्रते ।
सञ्जगौ श्रवणचारु गोपिकामानमीनबलिशेन वेणुना ॥

क्रीडाद्रेर्यथा —

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्सम्पर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥

सरितो यथा —

अथोर्मिमालोन्मदराजहंसे रोधोलतापुष्पवहे सरय्वाः ।
विहर्तुमिच्छा वनितासखस्य तस्याम्भासि ग्रीष्मसुखे बभूव ॥

इत्याद्यन्यदप्युदाहार्यम् ।

अथानुभावाः—

भावं मनोगतं साक्षात् स्वहेतुं व्यञ्जयन्ति ये ।
तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः ॥ १९० ॥
ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसम्भवाः ।
तत्र च भावो हावो हेला शोभा च कान्तिदीप्ती च ॥
प्रागल्भ्यं माधुर्यं धैर्यौदार्ये च चित्तजा भावाः ।

तत्र भावः —

निर्विकारस्य चित्तस्य भावः स्यादादिविक्रिया ॥ १९२ ॥

तथोक्तं हि प्राक्तनैरपि —

"चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति ।
ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् ॥"

---

१ 'चीनैः— चि' क. पाठः.

इति ।

भावो यथा ममैव —

'बाला प्रसाधनविधौ विदधाति[1] चित्तं
दत्तादरा परिणये मणिपुत्रिकाणाम् ।
सा शङ्कते निजसखीजनमन्दहासै-
रालक्ष्यते तदिह भावनवावतारः ॥'

अत्र पूर्वं शैशवेन रसानभिज्ञस्य चित्तस्य प्रसाधनविधित्सा पाञ्चालिकापरिणयादरसखीजनहासशङ्कादीनां तत्प्रथममेव सम्भूतत्वाद् भावः ।

अथ हावः —

ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविलासकृत्[2] ।
भाव ईषत्प्रकाशो यः स हाव इति कथ्यते ॥१९३॥

यथा —

'धात्रीवचोभिर्ध्वनिमर्मगर्भैः क्षणं सरोषस्मितमात्तलज्जा ।
पाञ्चालिकाद्वन्द्वमयोजयत् सा सम्बन्धिनी स्वस्य सखीजनस्य॥'

अत्र चित्तविकाराणां रोषहर्षलज्जादीनां कुटिलेक्षणस्मितनताननत्वादिभिरीषत्प्रकाशनादयं हावः ।

अथ हेला —

नानाविकारैः सुव्यक्तः शृङ्गाराकृतिसूचकैः ।
हाव एव भवेद्धेला ललिताभिनयात्मिका ॥ १९४ ॥

यथा —

'विवृण्वती शैलसुतापि भावमङ्गैः स्फुट[3]द्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥'

---

१. 'नि' ग पाठः. २. 'का' क. पाठ. ३ 'कुचद्बा' ग पाठ.

अत्र रोमाञ्चमुखसाचीकरणपर्यस्तविलोचनत्वादिविकारैश्चित्तव्यापारस्यातिप्रकाशत्वेन हेला ।

अथ शोभा—

सा शोभा रूपभोगाद्यैर्यत् स्यादङ्गविभूषणम् ।

यथा—

'अशिथिलपरिरम्भाद्धर्शिष्टाङ्गरागा-
मविरतरतवेगादंसलम्बोरुजूटिम् ।
उषसि शयनगेहादुच्चलन्तीं स्खलन्तीं
करतलधृतनीवीं कातराक्षीं भजामः ॥'

अथ कान्तिः—

शोभैव कान्तिराख्याता मन्मथाप्यायनोज्ज्वला ॥ १९५ ॥

यथा —

'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासः शिथिलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥'

अत्र पूर्वरतान्तजनिताया वपुःकान्तेरुत्तररतारम्भहेतुत्वान्मन्मथाप्यायितत्वम् ।

अथ दीप्तिः—

कान्तिरेव वयोभोगदेशकालगुणादिभिः ।

उद्दीपितातिविस्तारं याता चेद् दीप्तिरुच्यते ॥ १९६ ॥

यथा—

'यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानाम-
ङ्गग्लानिं सुरतजनितां जालमार्गप्रविष्टैः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥'

अत्र प्रियतमालिङ्गनसौधज्योत्स्नादिगुणैः सुरतग्लानिव्यालोपनादुत्तरसुरतोत्साहरूपा दीप्तिः प्रतीयते ।

अथ प्रागल्भ्यं—

निश्शङ्कत्वं प्रयोगेषु प्रगल्भत्वं प्रचक्षते ।

यथा—

'शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया।
शिक्षितं युवतिनैपुणं तया यत् तदेव गुरुदक्षिणीकृतम् ॥'

अत्र गुरुदक्षिणीकृतमित्यनेन प्रतिकरणरूपं प्रागल्भ्यं प्रतीयते ।

अथ माधुर्यं—

माधुर्यं नाम चेष्टानां सर्वावस्थासु मार्दवम् ॥ १९७ ॥

यथा—

'वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामा विटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥'

अत्र पादाङ्गुष्ठेन कुसुमलोलनादिक्रियाणां नृत्तान्तपरि-

श्रान्तावपि चारुत्वान्माधुर्यम् ।

अथ धैर्यं—

स्थिरा चित्तोन्नतिर्या तु तद् धैर्यमिति संज्ञितम् ।

यथा—

'अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥'

अथौदार्यम्—

औदार्यं विनयं प्राहुः सर्वावस्थानुगं बुधाः ॥ १९८ ॥

यथा—

'कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥'

अत्रानपराधेऽपि निष्कासयतो रामस्यानुपालम्भात् सीताया औदार्यं प्रतीयते । सर्वावस्थासमत्वाविदितेङ्गिताकारत्वरूपयोर्लक्षणयोः चित्तधैर्य एवान्तर्भूतत्वाद् भोजराजलक्षितौ स्थैर्यगाम्भीर्यरूपावन्यौ द्वौ चित्तारम्भौ चास्मदुक्ते धैर्य एवान्तर्भूताविति दशैव चित्तारम्भाः ।

अथ गात्रारम्भाः—

लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम् ।
मोट्टायितं कुट्टिमितं विब्बोको ललितं तथा ॥ १९९ ॥
विहृतं चेति विज्ञेया योषितां दश गात्रजाः ।

---

१. 'का'. क पाठः.

तत्र लीला—

प्रियानुकरणं यत् तु मधुरालापपूर्वकैः ॥ २०० ॥
चेष्टितैर्गतिभिर्वा स्यात् सा लीलेति निगद्यते ।

यथा—

'दुष्टकालीयसर्पो॑ऽत्र कृष्णोऽहमिति चापरा ।
बाहुमास्फोट्य कृष्णस्य लीलासर्वस्वमाददे ॥'

अथ विलासः—

प्रियसम्प्राप्तिसमये भ्रूनेत्राननकर्मणाम् ॥ २०१ ॥
तात्कालिको विशेषो यः स विलास इतीरितः ।

यथा—

'बाला सखीतनुलतान्तरिता भवन्त-
मालोक्य मुग्धमधुरैरलसैरपाङ्गैः ।
शिङ्क्ष्मारमण! चित्तजमोहनास्त्र-
लक्ष्मीरभित्तिलिखितेव चिरं चकास्ति ॥'

अथ विच्छित्तिः—

आकल्पकल्पनाल्पापि विच्छित्तिरतिकान्तिकृत् ॥ २०२ ॥

यथा—

'आलोलैरधिगम्यते मधुकरैः केशेषु माल्यग्रहः
कान्तिः कापि कपोलयोः प्रथयते ताम्बूलमन्तर्गतम् ।
अङ्गानामनुमीयते परिमलैरालेपनप्रक्रिया
वेषः कोऽपि विदग्ध एष सुदृशः सूते सुखं चक्षुषोः ॥'

---

१. 'भोगेन कृष्टाहं' क. पाठः.

अथ विभ्रमः—

प्रियागमनवेलायां मदनावेशसम्भ्रमात् ।
विभ्रमोऽङ्गदहारादिभूषास्थाने[1]विपर्ययः ॥ २०३ ॥

यथा—

'चकार काचित् सितचन्दनाङ्के काञ्चीकलापं स्तनभारयुग्मे ।
प्रियं प्रति प्रेषितदृष्टिरन्या नितम्बबिम्बे च बबन्ध हारम् ॥'

अथ किलिकिञ्चितं—

शोकरोषाश्रुहर्षादेः सङ्करः किलिकिञ्चितम् ।

यथा[2]—

'उक्तं श्रुतं द्यूतपणं सखीभ्यो विवक्षति प्रेयसि कुञ्चितभ्रूः ।
कण्ठं कराभ्यामवलम्ब्य तस्य मुखं पिधत्ते स्म कपोलकेन ॥'

यथा वा—

'रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे ।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदितं
स्मितक्रोधोद्भ्रान्तं पुनरपि निदध्यान्मयि मुखम् ॥'

अथ मोट्टायितं—

स्वाभिलाषप्रकटनं मोट्टायितमितीरितम् ॥ २०४ ॥

यथा ममैव—

'आकर्ण्य कर्णयुगलैकरसायनानि
तन्व्या प्रियस्य गदितानि सखीकथासु ।

---

१. 'ने वि', २. 'था — र' क. पाठः.

आलोलकङ्कणझणत्करणाभिराम-
मावेल्लिते भुजलते ललिताङ्गभङ्गम् ॥'

अथ कुट्टिमितं —

केशाधरादिग्रहणे मोदमानेऽपि मानसे ।
दुःखितेव बहिः कुप्येद् यत्र कुट्टिमितं हि तत् ॥२०५॥

यथा —

'पाणिपल्लवविधूननमन्तस्सीत्कृतानि नयनार्धनिमेषाः ।
योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥'

अत्र रहसीति सामान्यसूचितानां केशाधरग्रहणादीनां कार्यभूतैः पाणिपल्लवविधूननसीत्कृतादिभिर्बहिरेव कोपस्य प्रतीयमानत्वात् कुट्टिमितम् ।

अथ विब्वोकम् —

इष्टेऽप्यनादरो गर्वान्मानाद् विब्वोक ईरितः ।

गर्वाद् यथा —

'पुंसानुनीता शतसामवादैर्हालां निरीहेव चुचुम्ब काचित् ।
अर्थानभीष्टानपि वामशीलाः स्त्रियः परार्थानिव कल्पयन्ति ॥'

मानाद् यथा —

'निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥'

अत्र सन्ध्यानिमित्तमनादरेण विब्वोकः ।

---

१. 'मानादना' क. पाठः.

अथ ललितं —

विन्यासभाङ्गिरङ्गानां भ्रूविलासमनोहरा ॥ २०६ ॥

सुकुमारा भवेद् यत्र ललितं तदुदीरितम् ।

यथा —

'चरणकमलकान्त्या देहलीमर्चयन्ती
कनकमयकपाटं पाणिना कम्पयन्ती ।
कुवलयमयमक्ष्णा तोरणं पूरयन्ती
वरतनुरियमास्ते मन्दिरस्येव लक्ष्मीः ॥'

अथ विहृतम् —

ईर्ष्यया मानलज्जाभ्यामदत्तं योग्यमुत्तरम् ॥ २०७ ॥

क्रियया व्यज्यते यत्र विहृतं तदुदीरितम् ।

ईर्ष्यया यथा —

'तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे ।
आर्ये! व्रजावोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श[1] ॥'

व्रजाव इत्यत्रोत्तरस्य[2] कुटिलदर्शनेनैव व्यञ्जनाद् विहृतम् ।

मानेन यथा —

'अद्यापि तन्मनसि सम्परिवर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।

---

१. 'र्श। अत्र व्र', २. 'त्युत्तरमदत्त्वा कु' ग घ. ङ. पाठः.

जीवेति मङ्गलवचः परिहृत्य रोषात्

कर्णेऽर्पितं कनकपत्रमनालपन्त्या ॥

लज्जया यथा—

'अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।

वीक्षितेन परिगृह्य पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥'

इत्थं श्रीशिङ्गभूपेन सत्त्वालङ्कारशालिना ॥ २०८ ॥

कथिताः सत्त्वजाः स्त्रीणामलङ्कारास्तु विंशतिः ।

सत्त्वाद्दशैव भावाद्या जाता लीलादयस्तु न ॥ २०९ ॥

अतो हि विंशतिर्भावाः सात्त्विका इति नोचितम् ।

युज्यते सात्त्विकत्वं च भावादिसहचारिणः ॥ २१० ॥

लीलादिदशकस्यापि छत्रिन्यायबलात् स्फुटम् ।

भोजेन क्रीडितं केलिरित्यन्यौ गात्रजौ स्मृतौ ॥ २११ ॥

अतो विंशतिरित्यत्र सङ्ख्येयं नोपपद्यते ।

तथाभिहितमनेनैव[2] च—

"क्रीडितं केलिरित्यन्यौ गात्रारम्भावुदाहृतौ ।

बाल्ययौवनकौमारसाधारणविहारभाक् ॥

विशेषः क्रीडितं केलिस्तदेव दयिताश्रयम् ।"

इति । उदाहृतं च । क्रीडितं यथा—

'मन्दाकिनीसैकतवेदिकाभिः

सा कन्दुकैः कृत्रिमपुत्रकैश्च ।

१ 'र्थात् स' क पाठ· २ 'लषित' क. ड. पाटः.

रेमे मुहुर्मध्यगता सखीनां
क्रीडारसं निर्विशतीव बाल्ये ॥'

केलिर्यथा—

'व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥'

इति ।

अत्रोच्यते भावतत्त्ववेदिना शिङ्गभूभुजा ॥ २१२ ॥
आद्यः प्रागेव भावादिसमुत्पत्तेश्च शैशवे ।
कन्याविनोदमात्रत्वादनुभावेषु नेष्यते ॥ २१३ ॥
प्रेमविस्रम्भमात्रत्वान्नान्यस्याप्यनुभावता ।
अतो विंशतिरित्येषा संख्या संख्यावतां मता ॥ २१४ ॥

अथ पौरुषसात्त्विकाः—

शोभा विलासो माधुर्यं धैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥ २१५ ॥

तत्र शोभा—

नीचे दयाधिके स्पर्धा शौर्योत्साहौ च दक्षता ।
यत्र प्रकटतां यान्ति सा शोभेति प्रकीर्तिता ॥ २१६ ॥

नीचे दयाधिके स्पर्धा यथा—

'क्षुद्राः! सन्त्रासमेनं विजहित हरयो! भिन्नशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधति परमगी सायकाः सम्पतन्तः।
सौमित्रे! तिष्ठ पात्रं त्वमपि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥'

अत्र प्रथमार्धे क्षुद्रकपिविषया दया । उत्तरार्धे रामविषया स्पर्धा चेन्द्रजितः प्रतीयते । शौर्यं सत्त्वसारः । उत्साहः स्थैर्यम् । दक्षता क्षिप्रकारित्वम् । एषां नायकगुणनिरूपणावसर एवोदाहरणानि दर्शितानि ।

अथ विलासः—

वृषभस्येव गम्भीरा गतिर्धीरं च दर्शनम् ।
सस्मितं च वचो यत्र स विलास इतीरितः ॥ २१७ ॥

गभीरगमनं यथा—

'तानर्घ्यानर्घ्यमादाय दूरं प्रत्युद्ययौ गिरिः ।
नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥'

धीरदृष्टिर्यथा—

'ततो गभीरं विनिवर्तितेन प्रभातपङ्केरुहबन्धुरेण ।
अपश्यदक्ष्णा मधुमात्मजन्मा प्रत्याबभाषे स च दैत्यदूतम् ॥'

सस्मितं वचो यथा—

'द्योतितान्तस्सभैः कुन्दकुड्मलाग्रदतः स्मितैः ।
स्नापितेवाभवत् तस्य शुद्धवर्णा सरस्वती ॥'

अथ माधुर्यं—

तन्माधुर्यं यत्र चेष्टादृष्ट्यादेः स्पृहणीयता ।

यथा—

'ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च तत् ॥'

धैर्यगाम्भीर्ये तु नायकवर्णनावसर एवोक्ते ।

अथ ललितं —

श‍ृङ्गारप्रचुरा चेष्टा यत्र तल्ललितं भवेत् ॥ २१८ ॥

यथा—

'कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥'

औदार्यतेजसोरपि नायकप्रसङ्ग एव लक्षणोदाहरणे प्रोक्ते ।

अत्र गाम्भीर्यधैर्ये द्वे चित्तजे गात्रजाः परे ।
एके साधारणानेतान्मेनिरे [1]चित्तगात्रयोः ॥ २१९ ॥

अथ वागारम्भाः—

आलापश्च विलापश्च सल्लापश्च प्रलापकः ।
अनुलापापलापौ च सन्देशश्चातिदेशकः ॥ २२० ॥
निर्देशश्चोपदेशश्चापदेशो व्यपदेशकः ।
एवं द्वादशधा प्रोक्ता वागारम्भा विचक्षणैः ॥ २२१ ॥

तत्रालापः—

चाटुप्रायोक्तिरालापः

यथा ममैव—

'कस्ते वाक्यामृतं त्यक्त्वा शृणोत्यन्यगिरं बुधः ।
सहकारफलं त्यक्त्वा निम्बं चुम्बति किं शुकः ॥'

यथा वा—

१ 'सत्त्वगा' ग घ. ङ पाठः

'धत्से धातुर्मधुप ! कमले सौख्यमर्धासिकायां
मुग्धाक्षीणां वहसि मृदुना कुन्तलेनोपमानम् ।
चापे किञ्च व्रजसि गुणतां शम्बरारेः किमन्यैः
पूजापुष्पं भवति भवतो भुक्तशेषः सुराणाम् ॥'

अथ विलापः—

विलापो दुःखजं वचः ।

यथा—

'[1]आर्यामरण्ये विजने विमोक्तुं श्रोतुं च तस्याः परिदेवितानि ।
सुखेन लङ्कासमरे [2]मृतं मामजीवयन्मारुतिरात्तवैरः ॥'

अथ सल्लाँपः—

उक्तिप्रत्युक्तिमद् वाक्यं सल्लाँप इति कीर्तितम् ॥ २२२ ॥

यथा—

'भिक्षां प्रदेहि ललितोत्पलपत्रनेत्रे !
पुष्पिण्यहं खलु सुरासुरवन्दनीय! ।
बाले! तथा यदि फलं [3]त्वयि विद्यते मे
वाक्यैरलं फलभुगीश! परोऽस्ति याहि ॥'

अथ प्रलापः—

व्यर्थालापः प्रलापः स्यात्

यथा—

'मुखं तु चन्द्रप्रतिमं तिमं तिमं
स्तनौ च पीनौ कठिनौ ठिनौ ठिनौ ।

---

१. 'सीता स्वहस्तेन वने' ख. ग पाठ  २ 'ह' क पाठः  ३ 'स्त्विह वि' घ. ङ पाठ.

कटिर्विशाला रभसा भसा भसा
अहो विचित्रं तरुणी रुणी रुणी ॥'

अथानुलापः—

अनुलापो मुहुर्वचः ।

यथा—

'तमस्तमो नहि नहि मेचकाः कचाः
शशी शशी नहि नहि दृक्सुखं मुखम् ।
लते लते नहि नहि सुन्दरौ करौ
नभो नभो नहि नहि चारु मध्यमम् ॥'

अथापलापः—

अपलापस्तु पूर्वोक्तस्यान्यथायोजनं भवेत् ॥ २२३ ॥

यथा—

'त्वं रुक्मिणी त्वं खलु सत्यभामा किमत्र गोत्रस्खलनं ममेति ।
प्रसादयन् व्याजपदेन राधां पुनातु देवः पुरुषोत्तमो वः ॥'

अत्र नायिकावाचकयोः रुक्मिणीसत्यभामापदयोः पूर्वोक्तयोः सुवर्णवत्त्वसत्यकोपत्वलक्षणेनार्थेन योजनादपलापः ॥

अथ सन्देशः—

सन्देशस्तु प्रोषितस्य स्ववार्ताप्रेषणं भवेत् ।

यथा—

'एतस्मान्मां कुशलिनमभिज्ञानदानाद् विदित्वा
मा कौलीनादसितनयने ! मय्यविश्वासिनी भूः ।

स्नेहानाहुः किमपि विरहे ह्रासिनस्ते ह्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥'

अथातिदेशः—

सोऽतिदेशो मदुक्तानि तदुक्तानीति यद् वचः ॥ २२४ ॥

यथा—

'तनयां तव याचते हरिर्जगदात्मा पुरुषोत्तमः स्वयम् ।
गिरिगह्वरशब्दसन्निभां गिरमस्माकमवेहि वारिधे! ॥

अथ निर्देशः—

निर्देशस्तु भवेत् सोऽयमहमित्यादिभाषणम् ।

यथा—

'एते वयममी दाराः कन्येयं कुलजीवितम्[1] ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥'

अथोपदेशः—

यत्र शिक्षार्थवचनमुपदेशः स उच्यते ॥ २२५ ॥

यथा—

'अनुभवत दत्त वित्तं मान्यं मानयत सज्जनं भजत ।
अतिपरुषपवनविलुलितदीपशिखाचञ्चला लक्ष्मीः ॥'

अथापदेशः—

अन्यार्थकथनं यत्र सोऽपदेश इतीरितः ।

यथा—

'कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् ।

---

१ 'भूषणम् ।' क. पाठ.

इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥'

अथ व्यपदेशः—

व्याजेनात्माभिलाषोक्तिर्यत्रायं व्यपदेशकः ॥ २२६ ॥

यथा—

*'अहिणवमहुळोळुवो तुमं तह परिचुम्बिअ चूदमञ्जरिं ।
कमळवसइमेत्तणिव्वुदो महुअर! विह्मरिदो सि णं कहं ॥'

अथ बुद्ध्यारम्भाः—

बुद्ध्यारम्भास्तथा प्रोक्ता रीतिवृत्तिप्रवृत्तयः ।

तत्र रीतिः—

रीतिः स्यात् पदविन्यासभङ्गी सा तु त्रिधा मता ॥
कोमला कठिना मिश्रा चेति स्यात् तत्र कोमला ।
द्वितीयतुर्यवर्णैर्या स्वल्पैर्वर्गेषु निर्मिता ॥ २२८ ॥
अल्पप्राणाक्षरप्राया दशप्राणसमन्विता ।
समासरहिता स्वल्पैः समासैर्वा विभूषिता ॥ १२९ ॥
विदर्भजनहृद्यत्वात् सा वैदर्भीति कथ्यते ।

महाप्राणवर्णाल्पत्वमल्पप्राणाक्षरप्रायत्वं च यथा—

'उत्फुल्लगण्डयुगमुद्गतमन्दहास-
मुद्वेलरागमुररीकृतकामतन्त्रम् ।

१. 'कुचयुग बि' ग. घ ङ. पाठ

---

* अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर! विस्मृतोऽस्येनां कथम् ॥

हस्तेन हस्तमवलम्ब्य कदानु सेवे
सल्लाँपरूपममृतं सरसीरुहाक्ष्याः॥'

समासराहित्यं यथा—

'अथ यन्तारमादिश्य धुर्यान् विश्रामयेति सः।
तामवारोपयत् पत्नीं रथादवततार च॥'

दश प्राणास्तु—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता॥ २३०॥
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः।
एते वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः॥ २३१॥

तत्र श्लेषः—

केवलाल्पप्राणवर्णपदसन्दर्भलक्षणम्।
शैथिल्यं यत्र न स्पष्टं[1] स श्लेषः समुदाहृतः॥ २३२॥

यथा ममैव 'उत्फुल्लगण्डयुगम्' इत्यादौ श्लिष्टवर्णमिश्रितबन्धत्वाच्छ्लेषः।

अथ प्रसादः—

प्रसिद्धार्थपदत्वं[2] यत् स प्रसादो निगद्यते।

यथा 'उत्फुल्लगण्डयुगम्' इत्यत्र पदानामक्लेशेनैवार्थबोधनसामर्थ्यात् प्रसादः।

अथ समता—

बन्धवैषम्यराहित्यं समता पदगुम्फनम्॥ २३३॥
बन्धो मृदुः स्फुटो मिश्र इति त्रेधा स भिद्यते।

१. 'स्पृ' ग. पाठ.. २. 'प्र' क पाठ.

तत्र मृदुवर्णबन्धस्य समता यथा—

'चरणकमलकान्त्या देहलीमर्चयन्ती
कनकमयकवाटं पाणिना कम्पयन्ती ।
कुवलयमयमक्ष्णा तोरणं पूरयन्ती
वरतनुरियमास्ते मन्दिरस्येव लक्ष्मीः ॥'

अत्र मृदुवर्णप्रायबन्धस्य निर्व्यूढत्वान्मृदुबन्धसमता

स्फुटबन्धसमता यथा—

'मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥'

अत्र स्फुटवर्णप्रायबन्धस्य निर्व्यूढत्वात् समता । मिश्रबन्धसमता यथा 'उत्फुल्लगण्डयुगमुद्गतमन्दहासम्' इत्यत्र मिश्रीभूतमृदुस्फुटवर्णबन्धस्य निर्व्यूढत्वान्मिश्रबन्धसमता ।

अथ माधुर्यं—

तन्माधुर्यं भवेद् यत्र शब्देऽर्थे च स्फुटो रसः ॥ २३४ ।

यथा 'उत्फुल्लगण्डयुगम्' इत्यत्र शब्दार्थयोः शृङ्गाररसपरिवाहित्वेन माधुर्यम् ।

अथ सुकुमारत्वं—

यदनिष्ठुरवर्णत्वं सौकुमार्यं तदुच्यते ।

यथा 'उत्फुल्लगण्डयुगमुद्गतमन्दहासम्' इत्यत्र संयुक्ताक्षरसद्भावेऽप्यनिष्ठुरत्वात् सौकुमार्यम् ।

अथार्थव्यक्तिः—

श्रूयमाणस्य वाक्यस्य विना शब्दान्तरस्पृहाम् ॥
अर्थावगमकत्वं यदर्थव्यक्तिरियं मता ।

यथा 'उत्फुल्लगण्डयुगम्' इत्यत्र सर्वेषां पदानामध्याहार्यपदनिराकाङ्क्षतयार्थव्यक्तिः ।

अथोदारत्वम्—

उक्ते वाक्ये गुणोत्कर्षप्रतिभानमुदारता ॥ २३६ ॥

यथा 'उत्फुल्लगण्डयुगम्' इत्यत्रान्योन्यानुरागोत्कर्षप्रतिभानादुदारत्वम् ।

अथौजः—

समासबहुलत्वं यत् तदोज इति गीयते ।

यथा 'उत्फुल्लगण्डयुगम्' इत्यत्र यथोचितसमासबाहुल्यादोजः ।

अथ कान्तिः—

लोकस्थितिमनुल्लङ्घ्य हृद्यार्थप्रतिपादनम् ॥ २३७ ॥
कान्तिः स्याद् द्विविधा ख्याता वार्तायां वर्णनासु च ।

वार्ता नाम कुशलप्रश्नपूर्विका सङ्कथा । तत्र यथा—

'परिधौतभवत्पदाम्बुना नवचन्द्रातपशीतलेन मे ।
अपि सन्ततमर्मकृन्तनः कृतनिर्वाण इवौर्वपावकः ॥'

अत्र ब्राह्मणपादोदकस्य सन्तापशमनरूपां लौकिकीं स्थितिमनुल्लङ्घ्यैव समुद्रेण मुनीनां पुरतः सङ्कथनात्[2] कान्तिः ।

---

१ 'भूतच' ग. घ. ङ. पाठः. २ 'ङ्जल्पना' ख. ग. पाठः.

वर्णनायां यथा ममैव—

'उत्तुङ्गौ स्तनकलशौ रम्भास्तम्भोपमानमूरुयुगम् ।
तरले दृशौ च तस्याः सृजता धात्रा किमाहितं सुकृतम् ॥'

अत्र विशिष्टवस्तुनिर्माणमपुण्यकृतां न संभवतीति लोकस्थित्यनुरोधेनैव वर्णनात् कान्तिः ।

अथ समाधिः—

समाधिः सोऽन्यधर्माणां यदन्यत्राधिरोपणम् ॥ २३८ ॥

यथा 'उत्फुल्लगण्डयुगम्' इत्यत्रोत्फुल्लोद्गतोद्वेलत्वरूपाणां पुष्पप्राणिसमुद्रधर्माणां गण्डस्थलमन्दहासरागेषु समारोपितत्वात् समाधिः ।

अथ कठिना—

अतिदीर्घसमासयुता बहुलैर्वर्णैर्युता महाप्राणैः ।
कठिना सा गौडीयेत्युक्ता तद्देशबुधमनोज्ञत्वात् ॥ २३९ ॥

यथा—

'गण्डग्रावगरिष्ठगौरिकागिरिक्रीडत्सुधान्धोवधू-
बाधालम्पटबाहुसम्पदुदयद्वीरगर्वाशयम्[1] ।
मर्त्यामर्त्यविरावणं बलगृहीतैरावणं रावणं
बाणैर्दाशरथी रथी रथगतं विव्याध दिव्यायुधः ॥'

अत्र दीर्घसमासत्वं महाप्राणाक्षरप्रायत्वं च स्पष्टम् ।

---

१. 'बन्धाल' ख. ग पाठः.

अथ मिश्रा—

यत्रोभयगुणग्रामसन्निवेशस्तुलाधृतः।
सा मिश्रा सैव पाञ्चालीत्युक्ता तद्देशजप्रिया ॥ २४० ॥

यथा—

'परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं[1] व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥'

अत्रासमासदीर्घसमासत्वरूपयोः प्रसादस्फुटबन्धत्वरूपयोरनिष्ठुरनिष्ठुराक्षरप्रायत्वरूपयोः पृथक्पदत्वग्रन्थिलत्वयोश्चोभयरीतिधर्मयोस्तुलाधृतवत् सन्निवेशान्मिश्रेयं रीतिः।

आन्ध्री लाटी च सौराष्ट्रीत्यादयो मिश्ररीतयः।
सन्ति तत्तद्देशविद्वत्प्रियमिश्रणभेदतः ॥ २४१ ॥
त एव पदसङ्घातास्ता एवार्थविभूतयः।
तथापि नव्यं भवति काव्यं ग्रथनकौशलात् ॥ २४२ ॥
[2]तासां ग्रन्थगडुत्वेन लक्षणं नोच्यते मया।
भोजादिग्रन्थकारैस्तु तदाकाङ्क्षिभिरीक्ष्यताम् ॥ २४३ ॥

अथ वृत्तयः—

भारती सात्त्वती चैव कैशिक्यारभटीति च।
चतस्रो वृत्तयस्तासामुत्पत्तिर्वक्ष्यते स्फुटम्[3] ॥ २४४ ॥
जगत्येकार्णवे जाते भगवानव्ययः पुमान्।

---

१. 'प्रशिथिलभुजाक्षे', २ 'तस्माद् ग्र', ३ 'टम्। क्र' क. पाठः.

भोगिभोगमधिष्ठाय योगनिद्रापरोऽभवत् ॥ २४५ ॥

तदा वीर्यमदोन्मत्तौ दैत्येन्द्रौ मधुकैटभौ ।
तरसा देवदेवेशमागतौ रणकाङ्क्षिणौ ॥ २४६ ॥

विविधैः परुषैर्वाक्यैरधिक्षेपविधायिनौ ।
मुष्टिजानुप्रहारैश्च योधयामासतुर्हरिम् ॥ २४७ ॥

तन्नाभिकमलोत्पन्नः प्रजापतिरभाषत ।
किमेतद् भारती वृत्तिरधुनापि प्रवर्तते ॥ २४८ ॥

तदिमौ नय दुर्धर्षौ निधनं त्वरया विभो! ।
इति तस्य वचः श्रुत्वा निजगाद जनार्दनः ॥ २४९ ॥

इदं काव्यक्रियाहेतोर्भारती निर्मिता ध्रुवम् ।
भाषणाद् वाक्यबहुलाद् भारतीयं भविष्यति ॥ २५० ॥

अधुनैव निषूद्येतामित्याभाष्य वचो हरिः ।
निर्मलैर्निर्विकारैश्च साङ्गहारैर्मनोहरैः ॥ २५१ ॥

अङ्गैस्तौ योधयामास दैत्येन्द्रौ युद्धशालिनौ ।
भूमिस्थानकसंयोगैः पदक्षेपैस्तथा हरेः ॥ २५२ ॥

भूमेस्तदाभवद् भारस्तद्वशादपि भारती ।
वल्गितैः शार्ङ्गिणस्तत्र दीप्तैः सम्भ्रमवर्जितैः ॥ २५३ ॥

सत्त्वाधिकैर्बाहुदण्डैः सात्त्वती वृत्तिरुद्गता ।
विचित्रैरङ्गहारैश्च हेलया स तदा हरिः ॥ २५४ ॥

यत् तौ बबन्ध केशेषु जाता सा कैशिकी ततः ।

ससंरम्भैः सवेगैश्च चित्रचारीसमुत्थितैः ॥ २५५ ॥
नियुद्धकरणैर्जाता चित्रैरारभटी ततः ।
तस्माच्चित्रैरङ्गहारैः कृतं दानवमर्दनम् ॥ २५६ ॥
तस्मादब्जभुवा लोके नियुद्धसमयक्रमः ।
यः शस्त्रास्त्रादिमोक्षेषु न्यायः स परिभाषितः ॥ २५७ ॥
नाट्यकाव्यक्रियायोगरसभावसमन्वितः ।
स एव समयो धात्रा वृत्तिरित्येव संज्ञितः ॥ २५८ ॥
हरिणा तेन यद् वस्तु वल्गितैर्यादृशं कृतम् ।
तद्वदेव कृता वृत्तिर्धात्रा तस्याङ्गसम्भवा ॥ २५९ ॥
ऋग्वेदाच्च यजुर्वेदात् सामवेदादथर्वणः ।
भारत्याद्याः क्रमाज्जाता इत्यन्ये[1] तु प्रचक्षते ॥ २६० ॥

तत्र भारती --

प्रयुक्तत्वेन भरतैर्भारतीति निगद्यते ।
प्रस्तावनोपयोगित्वात् साङ्गं तत्रैव लक्ष्यते ॥ २६१ ॥

अथ सात्त्वती —

सात्त्विकेन गुणेनापि त्यागशौर्यादिना युता ।
हर्षप्रधाना सन्त्यक्तशोकभावा च या भवेत् ॥ २६२ ॥
सात्त्वती नाम सा वृत्तिः प्रोक्ता लक्षणकोविदैः ।
अङ्गान्यस्यास्तु चत्वारि सल्लाँपोत्थापकावपि ॥ २६३ ॥
[2]सङ्घात्यः परिवर्तश्चेत्येषां लक्षणमुच्यते ।

---

१. 'ति वृत्तिविदो विदु । त', २ 'सा' क पाठ..

ईर्ष्याक्रोधादिभिर्भावै रसैर्वीराद्भुतादिभिः ॥ २६४ ॥
परस्परं गभीरोक्तिः सल्लाप इति शब्द्यते ।

यथानर्घराघवे— 'रामः—

बन्दीकृत्य जगद्विजित्वरभुजस्तम्भौघदुस्सञ्चरं
रक्षोराजमपि त्वया विदधता सन्ध्यासमाधिव्रतम् ।
प्रत्यक्षीकृतकार्तवीर्यचरितामुन्मुच्य रेवां समं
सर्वाभिर्महिषीभिरम्बुनिधयो विश्वेऽपि विस्मापिताः ॥

वाली — (विहस्य)

चिराय रात्रिञ्चरवीरचक्रमाराङ्क्वैज्ञानिक! पश्यतस्त्वाम् ।
सुधासधर्माणमिमां च वाचं न शृण्वतस्तृप्यति मानसं मे ॥'

अत्र धीरोदात्तधीरोद्धतयोः रामवालिनोः परस्परं युद्ध-चिकीर्षाभिप्राययोगादन्योन्यपराक्रमोत्कर्षवर्णनात् सल्लापः ।

अथोत्थापकः—

प्रेरणं यत् परस्यादौ युद्धायोत्थापकस्तु सः ॥ २६५ ॥

यथानर्घराघवे— 'रामः—

नृपानप्रत्यक्षान् किमपि[2] वदसे नन्वयमहं
शिशुक्रीडाभग्नत्रिपुरहरधन्वा तव पुरः ।
अहङ्कारक्रूरार्जुनभुजवनव्रश्चनकला-
निसृष्टार्थो बाहुः कथय कतरस्ते प्रहरतु ॥'

अत्र रामभद्रेण प्राक् प्रहाराय जामदग्न्यः प्रेरित इत्युत्थापकः ।

१. 'नक्तञ्च' ग. घ ङ पाठ   २. 'पि' क पाठ.

अथ सङ्घात्यः[1]—

मन्त्रशक्त्यार्थशक्त्या वा दैवशक्त्याथ पौरुषात् ।
सङ्घस्य भेदनं यत् तु सङ्घात्यः[2] स उदाहृतः॥ २६६ ॥

मन्त्रो नयप्रयोगः । तस्य शक्त्या यथा मुद्राराक्षसे चाणक्येन शत्रुसहायानां भेदनात् सङ्घात्यः[3] । अर्थशक्त्या यथा महाभारते आदिपर्वणि देवैस्तिलोत्तमालक्षणेनार्थेन[4] सुन्दोपसुन्दयोरतिस्निग्धयोर्भेदनात् सङ्घात्यः ।

दैवशक्त्या यथा महावीरचरिते— 'माल्यवान्—

हा वत्साः! खरदूषणप्रभृतयो वध्याः स्थ पापस्य मे
हा हा वत्स! विभीषण! त्वमपि मे कार्येण हेयः स्थितः।
हा मद्वत्सल! वत्स! रावण! महत् पश्यामि ते सङ्कटं
वत्से! केकासि! हा हतासि न चिरात् त्रीन् पुत्रकान् पश्यसि ॥'

अत्र राघवानुकूलदैवमोहितेन माल्यवता खरदूषणत्रिशिरसां भेदः संविहित इति सङ्घात्यः ।

पौरुषाद् यथा—

'अथ भूतानि कर्णघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥'

अत्रार्जुनपराक्रमेण प्रमथपलायनकथनात् सङ्घात्यः[5] ।

अथ परिवर्तकः—

पूर्वोक्तस्य च कार्यस्य परित्यागेन यद् भवेत् ।

---

१, २, ३. 'सा' क. पाठः. ४. 'क्ष्येणार्थैं' ख. पाठ.. ५. 'सा' क. पाठः.

कार्यान्तरस्वीकरणं ज्ञेयः स परिवर्तकः ॥ २६७ ॥

यथोत्तररामचरिते पञ्चमाङ्के—'कुमारौ — (अन्योन्यं प्रति) अहो प्रियदर्शनः कुमारः । (सस्नेहानुरागं निर्वर्ण्य)

यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबन्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो
ममैतस्मिन् दृष्टे हृदयमवधानं रचयति ॥'

अत्र लवस्य चन्द्रकेतोः परस्पराकारावशेषसन्दर्शनेन रणसंरम्भौद्धत्यपरिहारेण विनयार्जवस्वीकारकथनात् परिवर्तकः ।

अथ कैशिकी —

नृत्तगीतविलासादिमृदुशृङ्गारचेष्टितैः ।
समन्विता भवेद् वृत्तिः कैशिकी श्लक्ष्णभूषणा ॥ २६८ ॥
अङ्गान्यस्यास्तु चत्वारि नर्म तत्पूर्वका इमे ।
स्फञ्जस्फोटौ च गर्भश्चेत्येषां लक्षणमुच्यते ॥ २६९ ॥

तत्र नर्म —

शृङ्गाररसभूयिष्ठः प्रियचित्तानुरञ्जकः ।
अग्राम्यः परिहासस्तु नर्म स्यात् तत् त्रिधा मतम् ॥
शृङ्गारहास्यजं शुद्धहास्यजं भयहास्यजम् ।
शृङ्गारहास्यजं नर्म त्रिविधं परिकीर्तितम् ॥ २७१ ॥

---

१ 'पातः कि', २ 'पदान' ग. घ ङ. पाठ·

सम्भोगेच्छाप्रकटनादनुरागानिवेदनात् ।
तथा कृतापराधस्य प्रियस्य प्रतिभेदनात् ॥ २७२ ॥
सम्भोगेच्छाप्रकटनं त्रिधा वाग्वेषचेष्टितैः ।

तत्र वाचा सम्भोगेच्छाप्रकटनाद् यथा—

'गच्छाम्यच्युत! दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदा[1]लसा-
माश्लिष्यन् पुलकोत्कराचिततनुं गोपीं हरिः पातु वः ॥'

अत्र निजावस्थानविलम्बनस्य व्यर्थत्वं धीरत्वादिसूचकैरच्युतादिपदैर्वदन्त्या तयापि गोपिकया वाचा सम्भोगेच्छा प्रकटि[2]तेति नर्म ।

वेषेण सम्भोगेच्छाप्रकटनाद् यथा—

'अभ्युद्गते शशिनि पेशलकान्तदूती-
सल्लापसंवलितलोचनमानसाभिः ।
अग्राहि मण्डनविधिर्विपरीतभूषा-
विन्यासहासितसखीजनमङ्गनाभिः ॥'

अत्र विपरीतन्यस्त[3]लक्षणभूषणेन वेषेण जनितैः सखीजनहासैः कामिनीनां सम्भोगेच्छा प्रकटितेति नर्म ।

चेष्टया सम्भोगेच्छाप्रकटनाद् यथा—

---

१. 'दां हसन्नाश्लि' घ. ङ पाठ. २. 'टनाम्नर्म', ३. 'स्तविभू' क. पाठः

*'आळोअच्चिअ सूरे घरणी घरसामिअस्स घेत्तूण ।
णेच्छन्तस्स वि चळणे धावइ हसँती हसन्तस्स ॥'

अत्र सूर्यास्तमयात् प्रागेव चरणप्रक्षालनलक्षणया क्रियया निष्क्रमणनिवारणजनितेन हासेन सम्भोगेच्छाप्रकटनान्नर्म ।

अनुरागप्रकाशोऽपि भोगेच्छानर्मवत् त्रिधा ॥ २७३ ॥

वाचानुरागनिवेदनाद् यथा—

'वयं तथा नाम यथात्थ किं वदा-
म्ययं त्वकस्मात् कलुषः कथान्तरे ।
कदम्बगोलाकृतिमाश्रितः कथं
विशुद्धमुग्धः कुलकन्यकाजनः ॥'

अत्र लवङ्गिकया विशुद्धमुग्धः कुलकन्यकाजन इति परिहासेन मदयन्तिकानुरागनिवेदनान्नर्म ।

वेषेणानुरागनिवेदनाद् यथा—

'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥'

अत्र पुलकसंरोहणलक्षणवेपजनितेन शिवस्य हसनेन गौरीहृदयानुरागस्य प्रकाशनान्नर्म ।

---

१. 'च कस्माद् विकल क' ख पाठः.

---

*'आलोक एव सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा ।
नेच्छतोऽपि चरणौ धावति हसन्ती हसतः ॥'

चेष्टयानुरागनिवेदनाद् यथा—

'कैतवेन शयिते कुतूहलात्
पार्वती प्रतिमुखं निपातितम् ।
चक्षुरुन्मिषति सस्मितं प्रिये
विद्युदाहतमिव न्यमीलयत् ॥'

अत्र पतिमुखदर्शनक्रियाजनितेन शिवस्य हासेन गौरीहृदयानुरागनिवेदनान्नर्म ।

प्रियापराधनिर्भेदोऽप्युक्तस्त्रेधा तथा बुधैः ।

वाचा प्रियापराधनिर्भेदाद् यथा मालविकाग्निमित्रे प्रथमाङ्के — 'देवी — (राजान विलोक्य सस्मितम्) *जइ राअकज्जेसु ईरिसी णिउणदा अय्यउत्तस्स, तदा सोहणं[1] भवे ।'

अत्र ईदृशी निपुणता यदीति चतुरोक्तिपरिहासेन त्वयैव मालविकादर्शनेन[2] नाट्याचार्ययोर्विवादः संविहित इति प्रिया[3]पराधोद्घाटनान्नर्म ।

वेषेण प्रियापराधनिर्भेदनाद् यथा —

'आलेपः क्रियतामयं द्रुतगतिस्वेदैरिवार्द्रं वपु-
स्तन्माल्यं व्यपनीयतां रविकरस्पर्शैरिवामर्दितम् ।
इत्युक्तान्यतिधीरया दयितया स्मेराननाम्भोरुहं
चाटूक्तानि भवन्ति हन्त कृतिनां मोदाय भोगादपि ॥'

---

१. 'णीअ भ' क पाठः. २ 'नान्नाव्य।' ग. घ. ङ. पाठः. ३. 'प्रणयोद्धा' क. पाठ .

---

*यदि राज्यकार्येष्वीदृशी निपुणतार्यपुत्रस्य, तदा शोभन भवेत् ।

अत्र स्वेदोद्गममाल्यम्लानत्वयोर्द्रु[1]तगमनरविकरस्पर्श-रूपकारणासत्यत्वकथनरूपेण परिहसनेन सपत्नीसम्भोग-रूपप्रियापराधनिर्भेदनान्नर्म ।

चेष्टया प्रियापराधनिर्भेदाद् यथा —

‘लोलभ्रूलतया विपक्षदिगुपन्यासे विधूतं शिर-

स्तद्वृ[2]त्तस्य निशामने कृतमनस्कारो[3] विलक्षः[4] स्थितः ।

[5]रोषात् ताम्रकपोलकान्तिनि मुखे दृष्ट्या नतं पादयो-

रुत्सृष्टो गुरुसन्निधावपि विधिर्द्वाभ्यां न कालोचितः ॥’

अत्र विलक्षस्थित[6] (हस्त?) शिरोधूननचेष्टया प्रियापरा-धनिर्भेदनान्नर्म ।

शुद्धहास्यजमप्युक्तं तद्वदेव त्रिधा बुधैः ॥ २७४ ॥

तत्र वाचा शुद्धहास्यजं यथा —

‘अर्चिष्मन्ति विदार्य वक्त्रकुहराण्या सृक्कतो वासुके-

स्तर्जन्या विषकर्बुरान् गणयतः संस्पृश्य दन्ताङ्कुरान् ।

एकं त्रीणि नवाष्ट सप्त षडिति [7]व्यत्यस्तसङ्ख्याक्रमा

वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥’

वेषेण शुद्धहास्यजं यथा —

---

१ ‘द्रुग’ घ. ङ पाठः. २. ‘त्तान्ताविदांक्षणे कृ’ क. पाठः. ३. ‘रे’, ४. ‘क्षस्मितम् ।’ ग. घ. ङ. पाठः ५. ‘ईषत् ता’ क, पाठः. ६. ‘स्मितसहितशि’, ७. ‘प्रध्वस्त’ ग. घ. ङ. पाठः.

'स्नायुन्यासनिबद्धकीकसतनुं नृत्यन्तमालोक्य मां
चामुण्डाकरतालकुट्टितलयं वृत्ते विवाहोत्सवे ।
ह्रीमुद्रामपनुद्य यद् विहसितं देव्या समं शम्भुना
तेनाद्यापि मयि प्रभुः स जगतामास्ते प्रसादोन्मुखः ॥'

अत्र भृङ्गिरिटिवेषेण शिवयोर्हसिताविर्भावाच्छुद्धहास्यजम् ।

चेष्टया शुद्धहास्यजं यथा—

'देव्या लीलालपितमधुरं लास्यमुल्लासयन्त्या
यः शृङ्गारो रहसि पुरतः पत्युराविष्कृतोऽभूत् ।
युष्मानव्यात् तदुपजनितं हास्यमम्बानुकारी
क्रीडानृत्तैर्विकटगतिभिर्व्यञ्जयन् कुञ्जरास्यः ॥'

अथ भयहास्यजं—

हास्याद् भयेन सहिताज्जनितं भयहास्यजम् ।
तद् द्विधा मुख्यमङ्गं च तद्द्वयं पूर्ववत् त्रिधा ॥ २७५ ॥

मुख्यं भयहास्यजं यथा—

'क्षेत्राधीशशुना नवेन विकृताकारैकविद्वेषिणा
घोरारावमभिद्रुतस्य विकटैः पश्चात् पदैर्गच्छतः ।
पा पा पाहि हि हीति सत्वरतरं व्यस्ताक्षरं जल्पतो
दृष्ट्वा भृङ्गिरिटेर्दशां पशुपतिः स्मेराननः पातु वः ॥'

अत्र भृङ्गिरिटेर्विकृताकारेण विकट[2]पश्चाद्गमनेन पाहिपाहि पाहीत्यत्र वर्ण[3]त्रयव्यत्यासेन भाषणेन च जनितस्य पशुपतिहासस्यान्यरसानङ्गतया मुख्यं भयहास्यजम्[4] ।

---

१. 'घ', २ 'कृतप', ३ 'र्णव्यत्यस्तसभावनेन प', ४ 'जम् । अत्रोदाहरणद्वयं पतितम् । वा' क. पाठः.

वाचान्यरसाङ्गं भयहास्यजं यथा रत्नावल्यां—

'विदूषकः—*कहं ण किदो पसादो देवीए, जं अज्ज वि अक्खदसरीरा चिट्ठह्म ।

राजा—(सस्मितम्) मूर्ख! किं परिहससि । त्वत्कृत एवापतितोऽयमस्माकं महानन्र्थः ।'

इत्यादौ विदूषकवाक्यजनितस्य भयहास्यस्य शृङ्गाराङ्गतया कथितत्वा[1]दिदमङ्गं भयहास्यजम् ।

वेषेण यथा—

'कल्याणदायि भवतोऽस्तु पिनाकपाणि-
पाणिग्रहे भुजगकङ्कणभीषितायाः ।
सम्भ्रान्तदृष्टि सहसैव नमः शिवायै-
त्यर्धोक्तिसस्मितनतं मुखमम्बिकायाः ॥'

अत्र भुजगकङ्कणलक्षणेन वेषेण जनितस्य पार्वतीभयहास्यस्य शृङ्गाराङ्गतया कथनात् तदिदमङ्गं भयहास्यजम् ।

चेष्टया यथा—

'प्रह्लादवत्सल! वयं बिभिमो विहारा-
दस्मादिति ध्वनितनर्मसु गोपिकासु ।
लीलामृदु स्तनतटेषु नखाङ्कुराणि
व्यापारयन्नवतु मम्मनृपं मुकुन्दः ॥'

---

१. 'थनात् तदि' क॰ पाठः.

---

* कथं न कृतः प्रसादो देव्या, यदद्याप्यक्षतशरीरास्तिष्ठामः ।

अत्र नखाङ्कुरव्यापारेण जनितस्य गोपिकाहासितस्य प्रह्लादवत्सलेति चतुरोक्तिरूपस्य शृङ्गाराङ्ग[1]भयहास्यजे[2]त्वम् ।

अग्राम्यनर्मनिर्माणवेदिना शिङ्गभूभुजा ।
नर्माष्टादशधा भिन्नमेवं स्फुटमुदाहृतम् ॥ २७६ ॥

अथ नर्मस्फञ्जः—

नर्मस्फञ्जः सुखोद्योगो भयान्तो नवसङ्गमे ।

यथा—

'अपेतव्यापारं द्रुतविविधशिल्पव्यतिकरं
करस्पर्शारम्भप्र (क ? ग)लितदुकूलान्तशयनम् ।
मुहुर्बद्धोत्कम्पं दिशि दिशि मुहुः प्रेरितदृशो-
रहल्यासुत्राम्णोः क्षणिकमिव तत् सङ्गतमभूत् ॥'

अथ नर्मस्फोटः—

नर्मस्फोटस्तु भावांशैः सूचितो[3]ऽल्प[4]रसो भवेत् ॥ २७७ ॥
अन्यैस्त्वकाण्डे[5] सम्भोगविच्छेद[6] इति गीयते ।

आद्यो यथा—

'स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो कामी स्वतां पश्यति ॥'

---

१. 'ङ्गतयाङ्गभ', २. 'जम्' क. पाठ. ३. 'ता' च. पाठ. ४. 'ल्पो' क. पाठ ५. 'ण्ड' च. पाठ.. ६. 'छित्तिरिति' क. पाठ..

अत्र सर्वं तत् किलेत्यनिश्चयेनानुरागस्य स्वल्पमात्र सूचनया नर्मस्फोटत्वम् ।

द्वितीयो यथा रत्नावल्यां—

'प्राप्ता कथमपि दैवात् कण्ठमनीत्वैव सा प्रकटरागा ।
रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता ॥'

अत्र विदूषकवाक्यसूचितदेवीशङ्काविसृष्टसागरिकाहस्तेन राज्ञाकाण्डे त्वया सम्भोगभङ्गः कृत इत्युक्तत्वाद् नर्मस्फोटः ।

अथ नर्मगर्भः—

नेतुर्वा नायिकाया वा व्यापारः स्वार्थसिद्धये ॥ २७८ ॥
प्रच्छादनपरो यस्तु नर्मगर्भः स कीर्तितः ।

यथा—

'श्रियो मान[2]ग्लाने[3]रनुशयविकल्पैः स्मितमुखे
सखीवर्गे गूढं कृतवसतिरुत्थाय [4]सहसा ।
समानेष्ये [1]तं तमहमिति जल्पन् नतमुखीं
प्रियां तामालिङ्गन् हरिररतिखेदं हरतु वः ॥'

अत्र कुपितायाः श्रियः प्रसादनार्थं सखीमध्ये पुरुषोत्तमेन प्रच्छन्नस्थित्यादिरूपो व्यापारः कृत इत्ययं नर्मगर्भः ।

पूर्वस्थितो विपद्येत नायको यत्र वा परस्तिष्ठेत् ॥ २७९ ॥
तमपीह नर्मगर्भं प्रवदति भरतो हि नाट्यवेदगुरुः ।

१ 'त्यादि स्वेना' २. 'म्ला', ३ 'नै' घ. ङ. पाठः. ४. 'तरसा' क. पाठः.

यथा—

'मयेन निर्मितां लङ्कां लब्ध्वा मन्दोदरीमपि ।
रेमे मूर्तां दशग्रीवलक्ष्मीमिव विभीषणः ॥'

अत्र रावणे विपन्ने तत्पदाभिषिक्तेन विभीषणेन मन्दोदर्यादिषु तदुचितं कर्म निर्मितमिति नर्मगर्भः । केचिच्चेतदारभटीभेदं संक्षिप्तमाहुः । तत्र मूलं न जानीमः ॥

अथारभटी—

मायेन्द्रजालप्रचुरां चित्रयुद्धक्रियामयीम् ॥ २८० ॥
छेद्यैर्भेद्यैः प्लुतैर्युक्तां वृत्तिमारभटीं विदुः ।
अङ्गान्यस्यास्तु चत्वारि संक्षितिरवपातनम् ॥ २८१ ॥
वस्तूत्थापनसंफेटाविति पूर्वे[1] बभाषिरे ।

तत्र सङ्क्षिप्तिः—

संक्षिप्तवस्तुविषया[2] या माया शिल्पयोजिता ॥ २८२ ॥
सा संक्षिप्तिरिति प्रोक्ता भरतेन महात्मना ।

यथानर्घराघवे—

'नीतो दूरं कनकहरिणच्छद्मना रामभद्रः
पश्चादेनं द्रुतमनुसरत्येष वत्सः कनिष्ठः ।
बिभ्यद् बिभ्यत् प्रविशति ततः पर्णशालां च भिक्षु-
र्धिग् धिक् कष्टं प्रथयति निजामाकृतिं रावणोऽयम् ॥'

अत्र बहुविधानां मायानां संक्षेपेण कथनात् सङ्क्षिप्तिः ।

---

१. 'वैर्बे', २. 'या माया या शि' च. पाठः.

वदन्त्यन्ये तु तां नेतुरवस्थान्तरसङ्गतिम् ॥ २८३ ॥

यथा—

'यदर्थमस्माभिरसि प्रकोपितस्तदद्य दृष्ट्वा तव धाम वैष्णवम्।
विकीर्णगर्वामयमस्मदान्तरं चिरस्य कश्चिल्लघिमानमश्नुते ॥'

अत्र रामभद्रसहवासेन परिहृतधीरोद्धतविकारस्य जामदग्न्यस्य धीरशान्तावस्थापरिग्रहात् सङ्क्षिप्तिरिति ॥

परिवर्तित[1]भेदत्वात् तदुपेक्षामहे वयम् ।

अथावपातनं—

विभ्रान्तिरवपातः स्यात् प्रवेशद्रावविद्रवैः ॥ २८४ ॥

यथा—

'हत्वा शन्तनुनन्दनस्य तुरगान् सूतं कुरूणां गुरो-
श्छित्वा द्रोणसुतस्य कार्मुकलतां कृत्वा विसंज्ञं कृपम्।
कर्णस्यापि रथं विदार्य [2]कैणशो विद्राव्य चा[3]न्यद् बलं
त्वत्पुत्रो भयविद्रवत्कुरुपतेः पन्थानमन्वेत्ययम् ॥'

अत्र कुरुबलानां भयविभ्रान्तिकथनादवपातनम् ।

अथ वस्तूत्थापनं —

तद् वस्तूत्थापनं यत् तु वस्तु मायोपकल्पितम् ।

यथा—

'मायाचुञ्चुरथेन्द्रजिद् रणमुखे खड्गेन दीनाननां
सौमित्रे! द्रुतमार्यपुत्र! चकितां मां पाहि पाहीति च ।

---

१. 'र्तकभे', २. 'बहुशो', ३. 'न्यान् भटान् त्व' क च. पाठ..

क्रोशन्तीं व्यथिताशयां हनुमता मा मेति सन्तर्जितः
कण्ठे कैतवमैथिलीं कुपितधीश्छिच्छेद तुच्छाशयः ॥'

अत्र निकुम्भिलायामाभिचारं चिकीर्षुणेन्द्रजिता राघवादिबुद्धिप्रमोषार्थे मायाकल्पितमैथिलीकण्ठखण्डनं कृतमिति वस्तूत्थापनम् ।

अथ संफेटः—

संफेटः[1] स्यात् समाघातः क्रुद्ध[2]संरम्भयोर्द्वयोः ॥ २८५ ॥

यथा—

'अन्योन्यसूतोन्मथनादभूतां
तावेव सूतौ रथिनौ च कौचित् ।
व्यश्वौ गदाव्यायतसम्प्रहारौ
भग्नायुधौ बाहुविमर्दनिष्ठौ ॥'

आसां च मध्ये वृत्तीनां शब्दवृत्तिस्तु भारती ।
तिस्रोऽर्थवृत्तयः शेषास्तच्चतस्रो हि वृत्तयः ॥ २८६ ॥
अन्यो[3]न्यमिश्रणादासां मिश्रां वृत्तिं च[4] पञ्चमीम् ।
अशेषरससामान्यां मन्यन्ते लक्ष[5]यन्ति च[6] ॥ २८७ ॥

यथा—

'यत्रारभट्यादिगुणाः समस्ता मिश्रत्वमा[7]श्रित्य मिथः प्रथन्ते ।
मिश्रेति तां वृत्तिमुशन्ति धीराः साधारणां[8] वृत्तिचतुष्टयस्य[9] ॥'

---

१. 'भे', २ 'क्रुद्धसरब्धयोजितः ॥' च, 'क्रुद्धसरुद्धयोजित' ग. घ. ङ पाठ. ३. 'न्ये विमि' च. पाठ ४. 'तु' ग. घ. ङ. पाठ ५. 'तर्कय', ६ 'च ॥ यत्रा' च पाठ.. ७. 'मन्येत्य', ८. 'णामर्थच' क. पाठ.. ९. 'स्य' ॥ कैशिकी स्यात्तु . भारती । केचित्तु तमिम . मन्वते । विचारसुन्दरो' च पाठः.

इति । तन्न विचारसहम् । कुतः, तत् किं वृत्तिधर्माणां मिश्रणमैकरूप्येण, न्यूनाधिकभावेन वा । न प्रथमः, अवैषम्येण मिश्रणाभावात् । तथा[1] मिश्रणे तु मिश्रवृत्तिव्यङ्ग्यो रसोऽपि मिश्रो[2] न्यूनाधिकः प्रसज्येत । वृत्तीनां च रसविशेष[3]नियमस्य वक्ष्यमाणत्वात् । ननु मिश्रा वृत्तिः सर्वरससाधारणीति चेद् । न । भारती[4]प्रभृतीनां नियतविषयत्वात् मूलप्रमाणाभावेन स्वोक्तिमात्रत्वाच्च । नापि द्वितीयः । वैषम्येणवृत्तिगुणानां मिश्रणे[5] यत्र यद्[6]वृत्तिप्रत्यभिज्ञाहेतुभूता बहवो गुणा लक्ष्यन्ते, तत्र सैव वृत्तिरिति निश्चयात् । ननु तत्र[7] प्रकरणादिवशेन रसविशेषव्यक्तिरिति चेत्, तर्हि प्रस्तुतरसानुरोधेनैव वृत्तिविशेषनिर्धारणमप्यङ्गीकर्तव्यमेव । तथाच भरतः—

'भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ।
सर्वेषां समवेतानां यस्य रूपं भवेद् बहु ॥
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ।'

इति । एतच्च शृङ्गारग्रहणं तज्जन्यानां हास्यादीनामप्युपलक्षणार्थम् । अतश्च शृङ्गारहास्ययोः कैशिकी, वीराद्भुतयोः सात्त्वती, रौद्रबीभत्सभयानकानां चारभटीति नियमः प्रतीयते ।

---

१. 'त्र' ग पाठ २. 'श्रस्तेना', ३. 'षयनि' क पाठः ४. 'त्या वृत्त्या प्रभृतवि' ग. घ ङ पाठः. ५ 'णेन य' क. पाठ.. ६ 'त', ७. 'त्र प्रकरणादि वापि रसो वापि प्र' ग. घ. ङ. पाठ..

तथाच भरतः—

'शृङ्गारं चैव हास्यं च वृत्तिः स्यात् कैशिकी मता ।
सात्त्वती नाम विज्ञेया रौद्रवीराद्भुताश्रया ॥
भयानके च बीभत्से रौद्रे चारभटी भवेत् ।
भारती चापि विज्ञेया करुणाद्भुतसंश्रया ॥'

इति[1] । अत्र सात्त्वत्या रौद्रानुप्रवेशकथनं रौद्रप्रतिभटस्य युद्धवीरस्यैव सल्लापादिभिः सात्त्वतीभेदैः परिपोषणं, न तु दानवीरदयावीरयोरिति ज्ञापनार्थम् । तस्मान्न नियमविरोधः । भारत्याश्च करुणाद्भुतविषयत्वकथनं तयोः प्रायेण वागारम्भमुखेन परिपोष इति ज्ञापनार्थम् । तेन भारत्याः सर्वरससाधारण्यमुपपन्नमेव ।

केचित्तु तमिमं श्लोकं भारतीयं नियामकम् ।
प्रायिकाभिप्रायतया व्याचक्षाणा विचक्षणाः ॥ २८८ ॥
आसां रसे तु वृत्तीनां नियमं नानुम(न्य?न्व)ते ।

तथाच—

स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥ २८९ ॥

इति ।

अथैतासां रसनियमः—

कैशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्त्वती ।
रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः ॥ २९० ॥
शृङ्गारादिषु सर्वेषु रसेष्विष्टैव भारती ।

कैशिकीत्यनुवृत्तौ रुद्रटः—

'शृङ्गारहास्यकरुणरससातिशयसिद्धये ।

---

१. 'ति । कैशिकीत्यनुवृत्तौ' क. पाठ .

एषा वृत्तिः प्रयत्नेन प्रयोज्या रसकोविदैः ॥'[1]

इति ।

विचारसुन्दरो नैष मार्गः स्यादित्युदास्महे ॥ २९१ ॥
कैशिकीवृत्तिभेदानां नर्मादीनां प्रकल्पनम् ।
यतः करुणमाश्रित्य रसाभासत्ववारणम् ॥ २९२ ॥
रसाभासप्रकरणे वक्ष्यते तदिदं स्फुटम् ।
तत्तन्न्यायप्रवीणेन न्यायमार्गानुवर्त्तिना ॥ २९३ ॥
दर्शितं शिङ्गभूपेन स्पष्टं वृत्तिचतुष्टयम् ।

अथ प्रवृत्तयः—

तत्तद्देशोचिता भाषा[2] क्रिया वेषाः प्रवृत्तयः ॥ २९४ ॥
तत्र भाषा द्विधा भाषा विभाषा चेति भेदतः ।
तत्र भाषा सप्तविधा प्राच्यावन्त्या च मागधी ॥ २९५ ॥
बाल्हिका दाक्षिणात्या च शूरसेन्यान्ध्रमागधी ।
सप्तधा स्याद् विभाषापि शबरद्रमिळान्ध्रजाः[3] ॥ २९६ ॥
शकाराभीरचण्डालवनेचरभवा इति ।
भाषाविभाषाः सन्त्यन्यास्तत्तद्देशजनोचिताः ॥ २९७ ॥
तासामनुपयोगित्वान्नात्र लक्षणमिष्यते ॥

अथ सात्त्विकाः—

अन्येषां सुखदुःखादिभावनाकृतभावनम् ॥ २९८ ॥
आनुकूल्येन यच्चित्तं भावकानां प्रवर्तते ।
सत्त्वं तदिति विज्ञेयं प्राज्ञैः सत्त्वोद्भवानिमान् ॥ २९९॥

---

१. 'ना । ' च. पाठः. २. 'षा.' ग. घ. पाठः. ३. 'बिडान्ध्र' ङ. पाठः.

सात्त्विका इति जानन्ति भरतादिमहर्षयः ।
सर्वेषामपि भावानां यैः सत्त्वं प्रविभाव्यते ॥ ३०० ॥
ते भावा भावतत्त्वज्ञैः सात्त्विकाः समुदीरिताः ।
ते स्तम्भस्वेदरोमाञ्चाः स्वरभेदश्च वेपथुः ॥ ३०१ ॥
वैवर्ण्यमश्रुप्रलयावित्यष्टौ परिकीर्तिताः ।

तत्र स्तम्भः—

स्तम्भो हर्षभयामर्षविषादाद्भुतसंभवः ॥ ३०२ ॥
अनुभावा भवन्त्येने स्तम्भस्य मुनिसम्मताः ।
संज्ञाविरहितत्वं च शून्यता निष्प्रकम्पता ॥ ३०३ ॥

हर्षाद् यथा—

'स्तम्भस्तथालम्भितमां नलेन
भैमीकरस्पर्शमुदः प्रसादः ।
कन्दर्पलक्षीकरणार्पितस्य
स्तम्भस्य दम्भं स चिरं यथापत् ॥'

अत्र नलस्य दमयन्तीकरस्पर्शहर्षेण स्तम्भः ।

भयाद् यथा—

'इन्द्रजिद्बाणसम्भीतास्तथा तस्थुर्वलीमुखाः ।
यथायं रणसंरम्भाद् विरतो मृतशङ्कया ॥'

अत्र मृतशङ्कयेति निष्प्रकम्पत्वद्योतनात् स्तम्भः ।

अमर्षाद् यथा—

'आलोक्य दुश्शासनमग्रतोऽपि
प्रवृद्धरोषा[1]तिभरान्धचेता: ।

---

१ 'दिभिरन्ध' क पाठः.

भीमः क्षणं शून्य इवावतस्थे
चित्तं निरुन्धे हि महान् विकारः ॥'

अत्र दुश्शासनविलोकनप्रवृद्धेनामर्षोत्कर्षेण भीमस्यात्मविस्मरणकथनादयममर्षेण स्तम्भः ।

विषादाद् यथा —

'यदत्र चिन्ताततिपाशजालै-
र्मुकुन्दगन्धद्विरदो बबन्धे ।
तेनारविन्दोदरमन्दिराया
दशां तनुः स्तम्भमयीमवाप ॥'

अत्र पुरुषोत्तमानवाप्तिजनितेन विषादेन लक्ष्म्याः स्तम्भः ।

अद्भुताद् यथा —

'तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिःष्यन्दिनी प्रातर्निवातेव वनस्थली ॥'

अत्र कुशलवगीतमाधुर्यातिशयेन श्रवणैकाग्रतारूपविस्मयेन स्तम्भः ।

अथ स्वेदः —

निदाघहर्षव्यायामश्रमक्रोधभयादिभिः ।
स्वेदः सञ्जायते तत्र त्वनुभावा भवन्त्यमी ॥ २०४ ॥
स्वेदापनयवातेच्छाव्यजनग्रहणादयः ।

निदाघाद् यथा —

'तार्तस्वराणि', २ 'तावि' ग. घ पाठ..

'करैरुपात्तान् कमलोत्करेभ्यो निजैर्विवस्वान् विकचोदरेभ्यः ।
तस्या निचिक्षेप मुखारविन्दे स्वेदापदेशान्मकरन्दबिन्दून् ॥'

हर्षाद् यथा —

'सख्या कृतानुज्ञमुपेत्य पश्चाद्
धून्वन् शिरोजान् करजैः प्रियायाः ।
अनार्द्रयन्नाननवायुनापि
स्विन्नान्तरानेव चकार कश्चित् ॥'

अत्रोभयोरन्योन्यस्पर्शहर्षेण स्वेदः ।

व्यायामाद् यथा —

'गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः
क्रामन्नूरुद्रुमभुजलताः पूर्णनाभिह्रदान्तः ।
उल्लङ्घ्योच्चैः कुचतटभुवं प्लावयन् रोमकूपान्
स्वेदापूरो युवतिसरितां प्राप गण्डस्थलानि ॥'

अत्र कुसुमापचयपर्यटनेन व्यायामेन स्वेदः । श्रमो रत्यादिपरिश्रान्तिः । तस्माद् यथा —

'म[1]ञ्चेषु पञ्चेषु[2]समाकुलानां
वाताय वातायनसंश्रितानाम् ।
स्विन्नानि खिन्नानि मुखान्यशंसन्
सम्भोगमम्भोरुहलोचनानाम् ॥'

आदिशब्दाद् गीतनृत्तश्रान्त्यादयः ।

१ 'म' ग. पाठ   २. 'शरा(र्दि)वाना' क पाठ.

गीतश्रान्त्या यथा —

'गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभं
प्रियामुखं किम्पुरुषश्चुचुम्ब ॥'

नृत्तश्रान्त्या यथा —

'चारुनृत्तविगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात् ।
प्रेमदत्तवदनानिलं पिबन्नत्यजीवदलकामरेश्वरौ ॥'

क्रोधाद् यथा —

'दधत् सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः ।
द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः ॥'

भयाद् यथा ममैव —

'कृतान्तजिह्वाकुटिलां कृपाणीं दृष्ट्वा यदीयां त्रसतामरीणाम् ।
स्वेदोदयश्चेतासि सञ्चितानां मानोष्मणामातनुते प्रशान्तिम् ॥'

अथ रोमाञ्चः —

रोमाञ्चो विस्मयोत्साहहर्षाद्यैस्तत्र विक्रियाः ॥ ३०५ ॥
रोमोद्गमोल्लासघनगात्रसंस्पर्शनादयः ।

विस्मयेन यथा —

'राघवस्य गुरुसारनिर्भरप्रौढिमाजगवभञ्जनोद्भटम् ।
दोर्बलं श्रुतवतः सभान्तरे रोमहर्षणमभूत् पिनाकिनः ॥'

उत्साहेन यथा —

---

१ 'ल्लकसनग ।' ग घ ङ. पाठः, 'ल्लसद्गात्राङ्गस' क. पाठः, 'ल्लसकन' च पाठः

'अन्त्रैः स्वैरपि संयताग्रचरणो मूर्च्छाविरामक्षणे
स्वाधीनव्रणिताङ्गशस्त्रविवरे रोमोद्गमं वर्मयन् ।
भग्नानु(द्द ? द्ध)लयन्निजान् परभटानातर्जयन् निष्ठुरं
धन्यो धाम जयश्रियः पृथुरणस्तम्भे पताकायते ॥'

अत्रोत्साहेन रोमाञ्चः ।

हर्षेण यथा—

'रोमाणि सर्वाण्यपि बालभावाद्
वरश्रियं वीक्षितुमुत्सुकानि ।
तस्यास्तदा कोरकिताङ्गयष्टे-
रुद्ग्रीविकादानमिवान्वभूवन् ॥'

अथ स्वरभेदः—

वैस्वर्यं सुखदुःखाद्यैस्तत्र स्युर्गद्गदादयः ॥ २०६ ॥

सुखेन यथा—

'पश्येम तं भूय इति ब्रुवाणां
सखीं वचोभिः किल सा ततर्ज ।
न प्रीतिकर्णेजपतां गतानि
भूयो बभूवुः स्वरवैकृतानि ॥'

अत्र प्रियसंस्मरणजनितेन हर्षेण भूयो वैस्वर्यम् ॥

दुःखेन यथा—

'विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥'

अथ वेपथुः—

वेपथुर्हर्षसन्त्रासजराक्रोधादिभिर्भवेत् ।
तत्रानुभावाः स्फुरणगात्रकम्पादयो मताः ॥ २०७ ॥

हर्षेण त्रासेन च यथा —

'तदङ्गमानन्दजडेन दोष्णा
पिता सबाणव्रणमाममर्श ।
निःश्वस्य निःश्वस्य मुहुश्च दीर्घं
प्रसूः कराभ्यां भयकम्पिताभ्याम् ॥'

जरया यथा —

'रुद्धानया बहुमुखी गति(मि?रि)न्द्रियाणां
बद्ध्वेव गाढमनया जरयोपगूढः ।
अङ्गेन वेपथुमता जडतायुजाहं
गन्तुं पदादपि पदं गदितुं च नालम् ॥'

क्रोधेन यथा —

'रुषा समाध्मातमगेन्द्रतुङ्गं
न केवलं तस्य वपुश्चकम्पे ।
ससिन्धुभूभृद्गगना च पृथ्वी
निपातितोल्का च सतारका द्यौः ॥'

अथ वैवर्ण्यं—

विषादातपरोषाद्यैर्वैवर्ण्यमुपजायते ।
मुखवर्णपरावृत्तिकार्श्याद्यास्तत्र विक्रियाः ॥ ३०८ ॥

विषादेन यथा—

'शरकाण्डपाण्डुगण्डस्थलीयमाभाति परिमिताभरणा ।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥'

अत्र विरहजनितेन विषादेन पाण्डुत्वम् ।

---

१. 'गा' च. पाठः.

आतपेन यथा—

'धूतानामभिमुखपातिभिः समीरै-
रायासादविशदलोचनोत्पलानाम् ।
आनिन्ये मदजनितां श्रियं वधूना-
मुष्णांशुद्युतिजनितः कपोलरागः ॥'

रोषेण यथा—

'कदा मुखं वरतनु ! कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥'

अथाश्रु—

विषादरोषसन्तोषधूमाद्यैरश्रु तत्क्रियाः ।
बाष्पबिन्दुपरिक्षेपनेत्रसम्मार्जनादयः ॥ २०९ ॥

विषादेन यथा—

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥'

रोषेण च यथा ममैव—

'कान्ते कृतागसि पुरः परिवर्तमाने
सख्यं सरोजशशिनोः सहसा बभूव ।

रोषाक्षरं सुदृशि वक्तुमपारयन्त्या-
मिन्दीवरद्वयमवाप तुषारधाराम् ॥'

अत्र सापराधप्रियदर्शनजनितेन रोषेण मुग्धाया बाष्पोद्गमः ।

सन्तोषेण यथा—

'आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद ।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिःष्यन्द इवावतीर्णः ॥'

अत्र चिरप्रोषितप्रत्यागतरामलक्ष्मणदर्शनानन्देन कौसल्यासुमित्रयोर्बाष्पः ।

धूमेन यथा—

'अस्मिन् क्षणे कान्तमलक्षयत् सा धूमाविलैरुद्गतबाष्पलेशैः ।
अन्तर्दलैरम्बुरुहामिवार्द्रैरयत्नकर्णाभरणैरपाङ्गैः ॥'

अत्र विवाहधूमेन लक्ष्म्या बाष्पोद्गमः ।

अथ प्रलयः—

प्रलयो दुःखघाताद्यैश्चेष्टा तत्र विसञ्ज्ञता ।

दुःखेन यथा—

'वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥'

अत्रेन्दुमतीविपत्तिजनितेन दुःखेनाजस्य प्रलय.

घातेन यथा—

'पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी ।
तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥'

अत्र प्रतिभटप्रहारेणाश्वसादिनो मूर्छा ।

सर्वेऽपि सत्त्वमूलत्वाद् भावा यद्यपि सात्त्विकाः ॥
तथाप्यमीषां सत्त्वैकमूलत्वात् सात्त्विकप्रथा ।
अनुभावाश्च कथ्यन्ते भावसंसूचनादमी ॥ ३११ ॥
एवं द्वैरूप्यमेतेषां कथितं भावकोविदैः ॥
अनुभावैकनिधिना सुखानुभवशालिना ॥ ३१२ ॥
श्रीशिङ्गभूभुजा साङ्गमनुभावा निरूपिताः ॥ ३१२½ ॥

अस्मत्कल्पलतादलानि गिलति [1]*त्वत्कामगौर्वार्यतां
मच्चिन्तामणिवेदिभिः परिणमेद् दूरान्नयोच्चैर्गजम् ।
इत्यारूढवितर्दिकाः प्रतिपथं जल्पन्ति भूदेवताः
शिङ्गक्ष्माभुजि कल्पवृक्षसुरभीहस्त्यादिदानोद्यते ॥३१३½॥

रक्षायां राक्षसारिं प्रबलविमतविद्रावणे वीरभद्रं
कारुण्ये रामभद्रं भुजबलविभवारोहणे रौहिणेयम् ।
पाञ्चालं चञ्चलाक्षीपरिचरणविधौ पूर्णचन्द्रं प्रसादे
कन्दर्पं रूपदर्पे तुलयति नितरां शिङ्गभूपालचन्द्रः ॥ ३१४½ ॥

इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगण्डभैरवश्रीअन्नपोतनरेन्द्र-
नन्दनभुजबलभीमश्रीशिङ्गभूपालविरचिते रसार्णवसुधा-[2]
करनाम्नि नाट्यालङ्कारे[3] रञ्जकोल्लासो नाम
प्रथमो विलासः ।

---

१. 'ग' च. पाठ  २ 'तर' क. ख. पाठः.  ३. 'रसाल' क. पाठ·.

---

* टजनित्य. ।

## अथ द्वितीयो विलासः।

अथ व्यभिचारिभावाः —

व्यभी इत्युपसर्गौ द्वौ विशेषाभिमुख[1]त्वयोः।
विशेषेणाभिमुख्येन चरन्ति स्थायिनं प्रति ॥ १ ॥
वागङ्गसत्त्वयुक्ता ये ज्ञेयास्ते व्यभिचारिणः।
सञ्चारयन्ति भावस्य गतिं सञ्चारिणोऽपि ते ॥ २ ॥
उन्मज्जन्तो निमज्जन्तः स्थायिन्यम्बुनिधाविव।
ऊर्मिवद् वर्धयन्त्येनं यान्ति तद्रूपतां च ते ॥ ३ ॥

निर्वेदोऽथ विषादो दैन्यं ग्लानिश्रमौ च मदगर्वौ।
शङ्कात्रासावेगा उन्मादापस्मृती तथा व्याधिः ॥ ४ ॥
मोहो मृतिरालस्यं जाड्यं व्रीलावहित्था च।
स्मृतिरथ वितर्कचिन्तामतिधृतयो हर्ष उत्सुकत्वं च ॥ ५ ॥
औग्र्यामर्षासूयाश्चापल्यं चैव निद्रा च।
सुप्तिर्बोध इतीमे ख्याता व्यभिचारिणस्त्रयस्त्रिं[2]शत् ॥ ६ ॥

तत्र निर्वेदः—

तत्त्वज्ञानाच्च दौर्गत्यादापदो विप्रयोगतः।
ईर्ष्या[3]देरपि नैष्फल्यमतिर्निर्वेद उच्यते ॥ ७ ॥

तत्र तत्त्वज्ञानाद् यथा—

'प्राप्ताः श्रियः सकलकामदुघास्ततः किं
न्यस्तं पदं शिरसि विद्विषतां ततः किम्।

१. 'त्वार्थयोः' ग घ. च पाठ.. २ 'शा.' क पाठ. ३. 'ति' च. पाठः.

सम्मानिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥'

दौर्गत्याद् यथा —

'किं विद्यासु विशारदैरपि सुतैः प्राप्ताधिकप्रश्रयैः
किं दारैरनुरूपरूपचरितैरात्मानुकूलैरपि ।
किं कार्यं चिरजीवितेन विगतव्याधिप्रचारेण वा
दारिद्र्योपहतं यदेतदखिलं दुःखाय मे केवलम् ॥'

आपदो यथा —

'सुरतश्रमसम्भृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते ।
अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम् ॥'

विप्रयोगाद् यथा —

'यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्सम्बद्धकथाभिरेव नियतं दीर्घाभिरस्थीयत ।
एकः सम्प्रति नाशितप्रियतमस्तामेव पापः कथं
रामः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा ॥'

अत्र सीताविप्रयुक्तस्य रामस्य वागारम्भसूचितेनावमानेन निर्वेदः प्रतीयते ।

ईर्ष्यया यथा —

'कुर्युः शस्त्रकथाममी यदि मनोर्वंशे मनुष्याङ्कुराः
स्याच्चेद् ब्रह्मगणोऽयमाकृतिगणस्तत्रेष्यते चेद् भवान् ।
सम्राजां समिधां च साधकतमं धत्ते छिदाकारणं
धिङ् मौर्वीकुशकर्षणोल्बणकिणग्रन्थिर्ममायं करः ॥'

अत्र रामचन्द्रशतानन्दविषयेर्ष्याजनितेन धिगिति वागारम्भसूचितेन स्वात्मावमानेन जामदग्न्यस्य निर्वेदः ।

अथ विषादः —

प्रारब्धकार्यानिर्वाहादिष्टानाप्तेर्विपत्तितः।
अपराधपरिज्ञानादनुतापस्तु यो भवेत् ॥ ८ ॥
विषादः स त्रिधा ज्येष्ठमध्य[1]नीचसमाश्रयात्।
सहायान्वेषणोपायचिन्ताद्या उत्तमे स्मृताः ॥ ९ ॥
अनुत्साहश्च वैचित्त्यमित्याद्या मध्यमे मताः।
अधमस्यानुभावाः स्युर्वै[2]वर्ण्यमवलोकनम् ॥ १० ॥
रोदनश्वसितध्यानमुखशोषादयोऽपि च।

प्रारब्धकार्यानिर्वाहाद् यथा —

'वारं वारं तिरयति दृशावुद्गतो बाष्पपूर-
स्तत्सङ्कल्पोपहितजडिम स्तम्भमभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥'

अत्र प्रस्तुतचित्रलेखानिर्वाहान्माधवस्य[3] किं करोमीति वागारम्भसूचितया तद्दर्शनोपायचिन्तया विषादो व्यज्यते।

इष्टानाप्तेर्यथा —

'सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥'

अत्रेन्दुमतीमाकाङ्क्षतां भूमिपतीनां तदनवाप्त्या मुखवैवर्ण्येन विषादः।

---

१. 'ध्यमाधमसश्च', २. 'चित्त्यम' क पाठ.. ३. 'स्योत्तमः किं' ख. ग. पाठः.

विपत्तितो यथा—

'हा हा धिक् परगृहवासगर्हणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत् तत् पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रविष्टम् ॥'

अत्र सीतापवादरूपाया विपत्तेः हा हा धिगिति वागारम्भेण रामस्य विषादो गम्यते ।

'सा दुर्निमित्तोपगताद् विषादात्
सद्यः परिम्लानमुखारविन्दा ।
राज्ञः शुभं सावरजस्य भूया-
दित्याशशंसे करणैरबाह्यैः ॥'

अत्र दुर्निमित्तानुमिताया विपत्तेर्मुखशोषणलक्षणेनानुभावेन वैदेह्या विषादः ।

अपराधपरिज्ञानाद् यथा—

'हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तश्शल्य इवासीत् क्षितिपोऽपि ॥'

अथ दैन्यं—

हृत्तापदुर्गतित्वाद्यैर्नैश्चिन्त्यं हृदि दीनता ॥ ११ ॥
अत्रानुभावा मालिन्यगात्रस्तम्भादयो मताः ।

---

१. 'रिवाद', २. 'तस्य वि' क पाठ. ३. 'त्तानुमिता', ४. '(श्रिय?शिव) सा' ग. घ. पाठः. ५. 'रनौर्जित्य हृदि' क. पाठः.

हृत्तापाद् यथा —

'एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्मनो मे
सौहार्दाद् वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान् देशान् विचर जलद ! प्रावृषा सम्भृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥'

दौर्गत्याद् यथा —

'दीना दीनमुखैः स[1]दैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितै[2]र्निरन्नविधुरा नेक्ष्येत चेद् गेहिनी ।
याच्ञादैन्यभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत् स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥'

अथ ग्लानिः —

आधिव्याधिजरातृष्णाव्यायामसुरतादिभिः ॥ १२ ॥
निष्प्राणता ग्लानिरत्र क्षामाङ्गवचनक्रिया ।
[3]तापानुत्साहवैवर्ण्यनयनभ्रमणादयः ॥ १३ ॥

आधिना यथा —

'किसलयमिव मुग्धं बन्धनाद् विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः [4]शरीरं
शरदिज इव घर्मः केतकीपत्त्रगर्भम् ॥'

---

१. 'स्वकीयशि', २. 'पिठरा दृश्येत' ग. घ. पाठः. ३. 'कम्पानु' क. ग. घ. च पाठः. ४. 'कपोल श' ग. घ. पाठः.

व्याधिना यथा —

'तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहाणिराययौ कामयानसमवस्थया तुलाम् ॥'

जरया यथा —

'त्रिवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा-
दभि[१]स्पष्टां दृष्टिं तिरयतितरां बाष्पसलिलैः ।
स्खल[२]द्व[३]र्णां वाणीं जनयतितरां गद्गदिकया
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ॥'

अत्र हर्षस्य जरासहकारित्वकथनादुभयानुभा[४]वैः कम्पादिभिर्जराग्लानेरेव प्राधान्यं गम्यते ॥

तृष्णया यथा —

'विन्ध्याध्वानो विरलसलिलास्तर्पिणी तत्र सीता
यावन्मूर्छां कलयति किल व्याकुले रामभद्रे ।
द्राक् सौमित्रिः पुट[५]जकलशैर्मालुधानीदलानां
तावत् प्राप्तो [६]धवदनिभृतां वारिधानीं करेण ॥'

व्यायामेन यथा —

'अतनुकुचभरानतेन भूयः क्लमजनितानतिना शरीरकेण ।
अनुचितगतिसादनिस्सहत्वं कलभकरोरुभिरूरुभिर्दधानैः ॥'

सुरतेन यथा—

'अतिप्रयत्नेन नितान्ततान्ता
कान्तेन तल्पादवरोपिता सा ।

---

१ 'वि' ग घ. पाठ २ 'ल्लज्जा वा' ङ पाठः. ३ 'क्का' क. पाठ. ४. 'वैरपि क' ग घ, ५. 'क' ग घ ङ. पाठः ६. 'विवृत सलिल. पाणिना दक्षिणेन ॥' ङ. पाठः,

आलम्ब्य तस्यैव करं करेण
ज्योत्स्नाकृतानन्दमलिन्दमाप ॥'

अथ श्रमः—

श्रमो मानसखेदः स्यादध्वनृत्तरतादिभिः ।
अङ्गमर्दननिःश्वासौ पादसंवाहनं तथा ॥ १४ ॥
जृम्भणं मन्दयानं च मुखनेत्रविकूणनम् ।
सीत्कृतिश्चेति विज्ञेया अनुभावाः श्रमोद्भवाः ॥ १५ ॥

अध्वना यथा—

'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात् त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमद्य कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥'

नृत्तेन यथा—

'स्वेदक्लेदितकङ्कणां भुजलतां कृत्वा मृदङ्गाश्रयां
चेटीहस्तसमर्पितैकचरणा मञ्जीरसन्धित्सया ।
सा भूयः स्तनकम्पसूचितरयं निःश्वासमामुञ्चती
रङ्गास्थानमनङ्गसात्कृतवती तालावधौ तस्थुषी ॥'

रत्या यथा ममैव— 'नितान्तसुरतश्रान्ताम्' इत्यादिः ।

अथ मदः—

मदस्त्वानन्दसम्मोहसम्भेदो मदिराकृतः ।
स त्रिधा तरुणो मध्योऽपकृष्टश्चेति भेदतः ॥ १६ ॥

दृष्टिः स्मेरा मुखे रागः सस्मिताकुलितं वचः ।
ललिताविद्धगत्याद्याश्चेष्टाः स्युस्तरुणे मदे ॥ १७ ॥

यथा—

'भावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।
चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥'

अथ मध्यमः—

मध्यमे तु मदे वाचि स्खलनं दृशि घूर्णता ।
गमने विकृतिर्बाह्वोर्विक्षेपस्रस्ततादयः ॥ १८ ॥

यथा—

'रुन्धती नयनवाक्यविकासं सादितोभयकरा परिरम्भे ।
व्रीलितस्य ललितं युवतीनां क्षीबता बहुगुणैरनुजह्रे ॥'

अथ नीचः—

अपकृष्टे तु चेष्टाः स्युर्गतिभङ्गो विसंज्ञता[2] ।
निष्ठीवनं मुहुः श्वासो हिक्का छर्द्यादयो[3] मताः ॥ १९ ॥

यथा—

'निष्ठीवन्त्यो मुखरितमुखं गौरवात् कन्धरायाः
प्रायो हिक्काविकलविकलं वाक्यमर्धं गृणन्त्यः ।
नैवापेक्षां गलितवसने नाप्युपेक्षामयन्ते
पायं पायं बहुविधमधून्येकवीर्ध्या[4] कुमार्यः ॥'

तरुणस्तूत्तमादीनां मध्यमो मध्यनीचयोः ।
अपकृष्टस्तु नीचानां तत्तन्मदविवर्धने ॥ २० ॥

१. 'हा' ग पाठ २. 'चेष्टता' क पाठः. ३ 'श्वर्याद' ख. ग. घ. च. पाठः. ४. 'र्यी.' ग, 'रा.' घ ङ. पाठः

उत्तमप्रकृतिः शेते मध्यो हसति गायति[1] ।
अधमप्रकृतिर्ग्राम्यं परुषं वक्ति रोदिति ॥ २१ ॥

उत्तमप्रकृतेर्मदवृद्धिर्यथा—

'तत्क्षणं विपरिवर्तितह्रियो-
नेष्यतोः शयनमिद्धरागयोः ।
सा बभूव वशवर्तिनी तयोः
प्रेयसः सुवदना मदस्य च ॥'

मध्यमस्य मदवृद्धिर्यथा—

'विनापि हेतुं विकटं जहास
पदेषु चस्खाल समेऽपि मार्गे ।
विघूर्णमानः स मदातिरेका-
दाकाशमालम्बनमाललम्बे[2] ॥'

अधमस्य मदवृद्धिर्यथा—

†'तह तह गामीणवहू मदविवसा किंपि किंपि वाहरइ ।
जह जह कुळवहुआओ सोऊण सरन्ति पिहिअकण्णाओ ॥'

ऐश्वर्यादिकृतः कश्चिन्मानो[3] मद इतीरितः ।
वक्ष्यमाणस्य गर्वस्य भेद एवेत्युदास्महे ॥ २२ ॥

अथ गर्वः—

ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि ।
इष्टलाभादिनान्येषामवज्ञा गर्व ईरितः ॥ २३ ॥

---

१. 'नृत्यति' ख पाठ.. २. 'म्बितुमा' क. पाठः. ३. 'न्म' ग. घ. पाठः.

---

† तथा तथा ग्रामीणवधूर्मदविवशा किमपि किमपि व्याहरति ।
यथा यथा कुलवध्व. श्रुत्वा सरन्ति पिहितकर्णाः ॥

अनुभावा भवन्त्यत्र गुर्वाद्याज्ञाव्यतिक्रमः ।
अनुत्तरप्रदानं च वैमुख्यं भाषणेऽपि च ॥ २४ ॥
विभ्रमापह्नुती वाक्यपारुष्यमनवेक्षणम् ।
अवेक्षणं निजाङ्गानामङ्गभङ्गादयोऽपि च ॥ २५ ॥

ऐश्वर्यमाज्ञासिद्धिः । तेन यथा —

'वह्ने! निह्नोतुमर्चिः परिचिनु पुरतः सिञ्चतो वारिवाहान्
हेमन्तस्यान्तिके स्याः प्रथयति दवथुं येन ते ग्रीष्म! नोष्मा ।
मार्तण्डाश्चण्डतापप्रशमनविधये धत्त सन्ध्यां जलार्द्रां
देवो नान्यप्रतापं त्रिभुवनविजयी मृष्यते श्रीदशास्यः ॥'

रूपतारुण्याभ्यां यथा —

'वाटीषु वाटीषु विलासिनीनां चरन् युवा चारुतयातिदृप्तः ।
तृणाय नामन्यत[2] पुष्पचापं करेण लीलाकलितारविन्दः ॥

कुलेन यथा —

'गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राधापुरी[3]
भूरिश्रेष्ठकनाम[4] धाम परमं तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महाकुला न विदिताः कस्यात्र तेषामपि
प्रज्ञाशीलविवेकधैर्यविनयाचारैरहं चोत्तमः ॥'

विद्यया यथा —

'बिन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं
कर्मेति क्रमाशिक्षितान्वयकला[5] ये केऽपि तेभ्यो नमः[6] ।
ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरा-
मुल्लेखैः कवयन्ति बिल्हणकविस्तेष्वेव सन्नह्यति ॥'

---

१. 'द्यो' क. ख पाठ.. २. 'सो' क. पाठः. ३. 'डा ततो भू' ग. 'ढा तो भू' घ पाठ . ४. 'मि' घ पाठ . ५. 'गुणा ये', ६. 'ञ्जलि. ।' ग. घ. पाठः.

बलेन यथा —

'रुद्राद्रेस्तुलनं स्वकण्ठविपिनच्छेदो हरेर्वासनं
कारावेश्मनि पुष्पकस्य हरणं यस्योर्जिताः केलयः ।
सोऽहं दुर्दमबाहुदण्डसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा घुणजर्जरेण धनुषाकृष्टेन भग्नेन वा ॥'

इष्टप्राप्त्या यथा —

'आस्तां तावदनङ्गचापविभवः का नाम सा कौमुदी
दूरे तिष्ठतु मत्तकोकिलरुतं संवान्तु मन्दानिलाः ।
हासोल्लासतरङ्गितैरसकलैर्नेत्राञ्चलैश्चञ्चलैः
साकूतैरुररीकरोति तरुणी सेयं प्रणामाञ्जलिम् ॥'

अथ शङ्का —

शङ्का चौर्यापराधादे:[1] स्वानिष्टोत्प्रेक्षणं मतम् ।
तत्र चेष्टा मुहुः पार्श्वदर्शनं मुखशोषणम् ॥ २६ ॥
अवकुण्ठनवैवर्ण्यकण्ठसादादयोऽपि च ।
शङ्का द्विधेयमात्मोत्था परोत्था चेति भेदतः ॥ २७ ॥
स्वकार्यजनिता स्वोत्था प्रायो व्यङ्ग्येयमिङ्गितैः ।
इङ्गितानि तु पक्ष्मभ्रूतारकादृष्टिविक्रियाः[2] ॥ २८ ॥

सैव चौर्येण स्वोत्था यथा —

'मृद्नन् क्षीरादिचौर्यान्मसृणसुरभिणी सृक्कणी पाणिघर्षै-
राघ्रायाघ्राय हस्तं सपदि परुषयन् किङ्किणीमेखलायाम् ।

1. 'दे.' क. पाठः 2 'या । स्वोत्था यथा—तत्सख्या मरुता ... ... ...गता ॥ सैव चौर्येण यथा' ग. घ. पाठ.

वारं वारं विशाले दिशि दिशि विकिरल्लोँचने लोलतारे
मन्दं मन्दं जनन्याः परिसरमयते कूटगोपालबालैः ॥'

सैवापराधात् स्वोत्था[1] । चौर्यात् परोत्था यथा —

परोत्था तु [2]निजस्यैव परस्याकार्यतो भवेत् ।
प्रायेणाकारचेष्टाभ्यां तामिमामनुभावयेत् ॥ २९ ॥
आका[3]रैः सात्त्वि[4]कैश्चेष्टा [5]स्त्वङ्गप्रत्यङ्गजाः क्रि[6]याः ।

यथा —

'तत्सख्या मरुताथवा प्रचलिता वल्लीति मुह्यद्धियो
दृष्ट्या व्याकुलतारया निगदतो मिथ्याप्रसादं मुखे ।
गङ्गानूतनसङ्गिनः पशुपतेरन्तःपुरं गच्छतो
नूत्ना सैव दशा स्वयं पिशुनतां देवीसखीनां गता ॥'

अपराधात् परोत्था यथा —

'प्रीते पुरा पुररिपौ परिभूय मर्त्यान्
वव्रेऽन्यतो यदभयं स भवानहंयुः ।
तन्मर्मणि स्पृशति मामतिमात्रमद्य
हा वत्स! शान्तमथवा दशकन्धरोऽसि ॥'

अत्र गर्वितरावणकृतेन मर्त्यनिराकरणाभयवरणेन जाता माल्यवतः शङ्का मर्मणि स्पृशतीत्यादिना वागारम्भेण प्रतीयते ।

अथ त्रासः —

त्रासस्तु चित्तचाञ्चल्यं विद्युत्क्रव्यादगर्जितैः ॥ ३० ॥

---

१. 'ल ॥ परोत्था तु', २. 'बिडालाद्यै परस्थाका' ग घ. पाठ.. ३. 'राः' ख. पाठ ४. 'का', ५ 'स्त्व' ख ग पाठ.. ६. 'या ॥ परोत्था यथा —प्री' ग. घ. पाठः ७. 'कृताभ', ८. 'ति वा' क. पाठः.

तथा भूतभुजङ्गाद्यैर्विज्ञेयास्तत्र विक्रियाः ।
उत्कम्पगात्रसङ्कोचरोमाञ्चस्तम्भगद्गदाः ॥ ३१ ॥
मुहुर्निमेषविभ्रान्तिपार्श्वस्थालम्बनादयः ।

विद्युतो यथा —

'वर्षासु तासु क्षणरुक्प्रकाशात्
त्रस्ता रमा शार्ङ्गिणमालिलिङ्ग ।
विद्युच्च सा वीक्ष्य तदङ्गशोभां
ह्रीणेव तूर्णं जलदं जगाहे ॥'

क्रव्यादो हिंस्रसत्त्वम् । तस्माद् यथा —

'स्वविक्रियादर्शित[1]साध्वसेन
प्रियाभिरालिङ्गित[2]कन्धराणाम् ।
अकारि भल्लूककुलेन यत्र
विद्याधराणामनिमित्तमैत्री ॥'

गर्जितेन यथा—

'प्रणयकोपभृतोऽपि पराङ्मुखाः
सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धुमनन्तरं
ववलिरे वलिरेचितमध्यमाः ॥'

गर्जितं महारवोपलक्षणम्। तेन भेर्यादिध्वनिरपि भवति । भेरीध्वनिना यथा —

'ननन्द निद्रारसभञ्जनैरपि
प्रयाणतूर्यध्वनिभिर्धरापतेः ।

१ 'र्शनस', २. 'लम्बित' ग. घ. पाठ.

अतर्कितातङ्कविलोलपङ्कजा-
पयोधरद्वन्द्वनिपीडितो हरिः ॥'

भूतदर्शनाद् यथा —

'सा पत्युः परिवारेण पिशाचैरपि वेष्टिता।
उत्कम्पमानहृदया सखीभिः समबोध्यत ॥'

भुजङ्गमाद् यथा —

'कल्याणदायि भवतोऽस्तु पिनाकपाणि-
पाणिग्रहे भुजगकङ्कणभीषितायाः।
सम्भ्रान्तदृष्टि सहसैव नमः शिवाये-
त्यर्धोक्तिसस्मितनतं मुखमम्बिकायाः ॥'

अथावेगः —

चित्तस्य सम्भ्रमो यः स्यादावेगोऽयं स चाष्टधा ॥ ३२ ॥
उत्पातवातवर्षाग्निमत्तकुञ्जरदर्शनात्।
प्रियाप्रियश्रुतेश्चापि शात्रवव्यसनादपि ॥ ३३ ॥
तत्रोत्पातास्तु शैलादिकम्पकेतूदयादयः।
तज्जाः सर्वाङ्गविस्रंसा वैमुख्यमपसर्पणम् [2] ॥ ३४ ॥
विषादमुखवैवर्ण्यविस्मयाद्यास्तु विक्रियाः।

शैलप्रकम्पनाद् यथा —

'कैलासाद्रावुदस्ते परिचलति गणेषूल्लसत्कौतुकेषु
क्रोडं मातुः कुमारे विशति विषमुचि प्रेक्षमाणे सरोषम्।

१. 'दि' च पाठ· २. 'मनस्यापसर्पणे।' क. पाठ..

पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं
क्रुद्धोऽप्याश्लिष्टमूर्तिर्घनतरमुमया पातु हृष्टः शिवो वः ॥'

अत्र कैलासकम्पजनितप्रमथगणविस्मयकार्त्तिकेयापसर्पणकात्यायनीसाध्वसादिभिरनुभावैस्तद्गतसम्भ्रमातिशयरूप आवेगो व्यज्यते।[1]

केतूदयाद् यथा —

'हन्तालोक्य कुटुम्बिनो दिविषदां धूमग्रहं दिङ्मुखे
त्रस्ताङ्गास्त्वरितं परस्परगृहानभ्येत्य चिन्तापराः ।
धान्यानामनतिव्ययाय गृहिणीराज्ञापयन्तो मुहु-
र्निध्यायन्ति विनिःश्वसन्ति गणशो रथ्यामुखेष्वासते ॥'

अथ वातावेगः —

त्वरयागमनं वस्त्रग्रहणं चावकुण्ठनम् ॥ ३५ ॥
नेत्रावमार्जनाद्याश्च वातावेगभवाः क्रियाः ।

यथा —

'दिक्षु क्षिप्ताङ्घ्रिपौघ[2]स्तृणजटिलचलत्पांसुदिग्धान्तरिक्षः
शात्कारी शर्करालः पथिषु विटपिनां स्कन्धकाषैः सधूमः ।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु! किं सम्भ्रमेण ॥'

अत्र वातकृतसंरम्भो वागारम्भेण प्रतिपाद्यते[3] ।

अथ वर्षावेगः —

[4]छत्रग्रहोऽङ्गसङ्कोचो बाहुस्वस्तिकधावने ॥ ३६ ॥

१. 'श्च जनितः स', २. 'पोऽय तृण', ग. घ. पाठः. ३. 'व्यज्यते' क. पाठः.
४. 'वित्तम' क. च. पाठः.

छिन्नश्रवणमित्याद्या वर्षावेगभवाः क्रियाः ।

यथा —

'आमेखलं सञ्चरतां घनानां छायामधस्सानुगता निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥'

अत्र सिद्धानाम[2]मग्रशिखरधावनेन सम्भ्रमः सूचितः ।

अथाग्न्यावेगः —

अग्न्यावेगभवाश्चेष्टा वीजनं चाङ्[3]गधूननम् ॥ ३७ ॥
व्यत्यस्तपदविक्षेपनेत्रसङ्कोचनादयः ।

यथा —

'दूरप्रोत्सार्यमाणाम्बरचरनिकरोत्तालकीलाभिघातः
प्रभ्रश्यद्वाजिवर्गभ्रमणनियमनव्याकुलब्रध्नसूतः ।
लेढि प्रौढो हुताशः कृतलयसमयाशङ्कमाकाशवीथीं
गङ्गासूनुप्रयुक्तप्रथितहुतवहास्त्रानुभावप्रसूतः ॥'

अथ कुञ्जरावेगः —

आवेगे कुञ्जरोद्भूते सत्वरं चापसर्पणम् ॥ ३८ ॥
विलोक[4]नं मुहुः पश्चात् त्रासकम्पादयो मताः ।

यथा —

'निरन्तरालेऽपि विमुच्यमाने दूरं पथि प्राणभृतां गणेन ।
तेजोमहद्भिस्तमसेव दीपैर्द्विपैरसम्बाधमयाम्बभूवे ॥'

---

१. 'मन्दग्रहण' ग. घ, 'मन्दश्र' च. पाठ. २. 'ना नगशि' ग. घ. पाठः.
३. 'व', ४ 'भ' च. पाठः

अत्र कुञ्जरग्रहणमश्वादीनामप्युपलक्षणम् ।

अश्वेन यथा —

'उत्पाट्य दर्पचलितेन सहैव रज्ज्वा
कीलं प्रयत्नपरमानवदुर्ग्रहेण ।
आकुल्यकारि कटकस्तुरगेण तूर्ण-
मश्वेति विद्रुतमनुद्रवतान्यमश्वम् ॥'

प्रियश्रवणाद् यथा —

प्रियश्रवणजे ह्यस्मिन्नभ्युत्थानोपगूहने ॥ ३९ ॥
प्रीतिदानं प्रियं वाक्यं रोमहर्षादयोऽपि च ।

'अवलोक एव नृपतेः स्म दूरतो
रभसाद् रथादवतरीतुमिच्छतः ।
अवतीर्णवान् प्रथममात्मना हरि-
र्विनयं विशेषयति सम्भ्रमेण सः ॥'

अप्रियश्रुतेर्यथा —

अप्रियश्रुतिजेऽप्यस्मिन् विलापः परिवर्तनम् ॥ ४० ॥
आक्रन्दनं भूपतनं परितोभ्रमणादयः ।

यथा —

'स कीचकनिषूदनो बकहिडिम्बकिम्मीरहा
मदान्धमगधाधिपद्विरदसन्धिबन्धाशनिः ।
गदापरिघमानिना भुजबलेन सम्मानितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥'

---

१. 'त्सार्य द' ग घ पाठः. २. 'अथाप्रियात् - अ' क. पाठ.

शात्रवाद् यथा —

चेष्टा[१]ः स्युः शात्रवावेगे वर्मशस्त्रादिधारणम् ॥ ४१ ॥
रथवाजिगजारोहे[२]सहसापक्रमादयः ।

यथा—

'रामो नाम बभूव हुं तदबला सीतेति हुं तां गुरो-[३]
र्वाचा पञ्चवटीवने[४] विहरतस्तस्याहरद् रावणः ।
निद्रार्थं[५] जननीकथामिति हरेर्हुंकारतः[६] शृण्वतः
सौमित्रे! क धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः ॥'

एते स्युरुत्तमादीनामनुभावा यथोचितम् ॥ ४२ ॥

अथोन्मादः —

उन्मादश्चित्तविभ्रान्तिर्वियोगादिष्टनाशतः ।
वियोगजे तु चेष्टाः स्युर्धावनं परिदेवनम् ॥ ४३ ॥
असम्बद्धप्रलपनं शयनं सहसोत्थितिः ।
अचेतनैः सहालापो निर्निमित्तस्मितादयः ॥ ४४ ॥

यथा —

'आशूत्थानं सदृशगणना चेतनाचेतनेषु
प्रौढोष्मार्चिः[७] श्वसितमसकृन्निर्गतो बाष्पपूरः ।
निर्लक्ष्या वाग् गतिरविषया निर्निमित्तं स्मितं च
प्रायेणास्याः प्रथयतितरां भ्रान्तिधात्रीमवस्थाम् ॥'

---

१ 'ष्टा तु शा', २. 'ह स' ग घ च पाठ. ३. 'पितुर्वा', ४. 'तले वि' क. पाठः. ५ 'र्धे', ६ 'कृण्वत.' ग. घ पाठ. ७. 'हि' ग., 'वि' घ. पाठ.

इष्टनाशाद् यथा —

इष्टनाशकृते त्वस्मिन् भस्मादिपरिलेपनम् ।
नृत्तगीतादिरचना तृणनिर्माल्यधारणम् ॥ ४५ ॥
चीवरावरणादीनि प्रागुक्ताश्चापि विक्रियाः ।

यथा करुणाकन्दले —

'कीनाशोऽपि बिभेति यादवकुलाद् वृद्धस्य का मे गति-
र्भेदः स्यात् स्वजनेषु किन्नु शतधा सीदन्ति गात्राणि मे ।
सोऽयं बुद्धिविपर्ययो मम समं सर्वे हता बान्धवा
न श्रद्धेयमिदं हि वाक्यमहहा मुह्यन्ति मर्माणि मे ॥'

अथापस्मृतिः —

धातुवैषम्यदोषेण भूतावेशादिना कृतः ॥ ४६ ॥
चित्तक्षोभस्त्वपस्मारस्तत्र चेष्टा प्रकम्पनम् ।
धावनं पतनं स्तम्भो भ्रमणं नेत्रविक्रिया ॥ ४७ ॥
स्वोष्ठदंशभुजास्फोटलालाफेनादयोऽपि च ।

यथा —

'लालाफेनव्यतिकरपरिक्लेदि भुग्नोष्ठपार्श्वं
गायं गायं कलितरुदितं प्रोन्नमन्तं नमन्तम् ।
स्तब्धोद्वृत्तक्षुभितनयनं मण्डलेन भ्रमन्तं
भूताविष्टं कमपि पुरुषं तत्र वीथ्यामपश्यम् ॥'

दोषवैषम्यजस्त्वेष व्याधिरेवेत्युदास्महे ॥ ४८ ॥

१. 'च' च पाठः.

अथ व्याधिः —

दोषोद्रेकवियोगाद्यैर्ज्वरः[1] स्याद् व्याधिरत्र तु ।
गात्रस्तम्भः श्लथाङ्गत्वं कूजनं मुखशोषणम्[2] ॥ ४९ ॥
स्रस्ताक्षताङ्गविक्षेपनिःश्वासाद्यास्तु स द्विधा ।
सशीतो दाहयुक्तश्च सशीते तत्र विक्रियाः[3] ॥ ५० ॥
हनुसञ्चालनं बाष्पः सर्वाङ्गोत्कम्पकूजने ।
जानुकुञ्चनरोमाञ्चमुखशोषादयोऽपि च ॥ ५१ ॥

यथा —

'रोमाञ्चमङ्कूरयति प्रकामं
स्पर्शेन सर्वाङ्गकसङ्गतेन ।
दोःस्वस्तिकाश्लिष्टपयोधराणां
शीतज्वरः कान्त इवाङ्गनानाम् ॥'

दाहज्वरे तु चेष्टाः स्युः शीतमाल्यादिकाङ्क्षणम् ।
पाणिपादपरिक्षेपमुखशोषादयोऽपि च ॥ ५२ ॥

यथा —

'शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते
ताम्यन्त्यन्तिकतालवृन्तनलिनीपत्राणि देहोष्मणा ।
न्यस्तं च स्तनमण्डले मलयजं दीर्णान्तरं दृश्यते
क्काथादाशु भवन्ति फेनिलमुखा भूषामृणालाङ्कुराः ॥

अथ मोहः —

आपद्भीतिवियोगाद्यैर्मोहश्चित्तस्य मूढता ।

---

१. 'ज्वरो व्याधिस्तु तत्क्रिया ।', २. 'कूणनम्' ग घ. पाठ', 'कूजनम्',
३. 'या' । च. पाठ'.

विक्रियास्तत्र विज्ञेया इन्द्रियाणां च शून्यता ॥ ५३ ॥
निश्चेष्टताङ्गभ्रमणपतनाघूर्णनादयः ।

आपदो यथा —

'ततोऽभिषङ्गानिलविप्रविद्धा
प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरित्रीं
लतेव सीता सहसा जगाम ॥'

भीतेर्यथा —

'स्मरस्तथाभूतमयुग्मनेत्रं
पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत् साध्वससन्नहस्तः
स्रस्तं शरं चापमपि स्वहस्तात् ॥'

वियोगाद् यथा —

'तद् वक्त्रं नयने च ते स्मितसुधामुग्धं च तद् वाचिकं
सा वेणी स भुजक्रमोऽतिसरलो लीलालसा सा गतिः ।
तन्वी सेति च सेति सेति सततं तद्ध्यानबद्धात्मनो
निद्रा नो न रतिर्न चापि विरतिः शून्यं मनो वर्तते ॥'

अथ मृतिः —

वायोर्धनञ्जयाख्यस्य विप्रयोगो[1] य आत्मना ॥ ५४ ॥
शरीरावच्छेदवता[2] मरणं नाम तद् भवेत् ।
एतच्च द्विविधं प्रोक्तं व्याधिजं चाभिघातजम् ॥ ५५ ॥
आद्यं त्वसाध्यहृच्छूलविपूच्यादिसमुद्भवम् ।

१. 'गेन यन्नृणाम् ॥', २ 'ता' च पाठ

अमी तत्रानुभावाः स्युरव्यक्ताक्षरभाषणम् ॥ ५६ ॥

विवर्णगात्रता मन्दश्वासादि स्तम्भमीलने।

हिक्कापरिजनापेक्षानिश्चेष्टेन्द्रियतादयः ॥ ५७ ॥

यथा—

'काये सीदति कण्ठरोधिनि कफे कुण्ठे च [1]वाणीपथे

जिह्मायां दृशि जीविते जिगमिषौ श्वासे शनैः [2]शाम्यति।

आगत्य स्वयमेव नः करुणया कात्यायनी[3]वल्लभः

कर्णे वर्णयताद् भवार्णवभयादुत्तारकं तारकम् ॥'

द्वितीयं घातपतनदाहोद्बन्धविषादिजम्।

तत्र घातादिजे भूमिपतनाक्रन्दनादयः ॥ ५८ ॥

यथा अभिरामराघवे—

'आर्यशरपातविवरादुद्बुद्बुदफेनिलास्रकर्दमिता।

अपतन्न चलति किञ्चिद[4] विकृताकृतिरद्य वज्रनिहतेव ॥'

विषं तु वत्सनाभाद्यमष्टौ वेगास्तदुद्भवाः।

कार्ष्ण्यं कम्पो दाहो हिक्का फेनश्च कन्धराभङ्गः ॥ ५९ ॥

जडता मृतिरिति कथि[5]ताः क्रमशः प्रथमादिवेगजाश्चे[6]ष्टाः।

यथा प्रियदर्शिकायाम्—

'एषा मीलयतीदमक्षियुगलं जाता ममान्धा दिशः

कण्ठोऽस्याः परिखिद्यते मम गिरो निर्यान्ति कृच्छ्रादिमाः।

एतस्याः श्वसितं हृतं मम तनुर्निश्चेष्टतामागता

मन्येऽस्या विषवेग एव हि परं सर्वं तु दुःखं मयि ॥'

---

१ 'कोलाहले ऽज', २. 'गच्छति', ३. 'कामुक क', ४. 'त् कूराक्' क. पाठ. ५. 'ता क', ६ 'चेष्टा ॥' क. ख. पाठः.

अत्राक्षिनिमीलनकण्ठरोधननिःश्वासायासादिभिरारण्यैकाया विषवेगजनिता मृतिरवगम्यते ।

अथालस्यं—

स्वभावश्रमसौहित्यगर्भनिर्भरतादिभिः ॥ ६० ॥
कृच्छ्रात् क्रियोन्मुखत्वं यत् तदालस्यमिह क्रिया ।
अङ्गभङ्गः क्रियाद्वेषो जृम्भणाक्षिविमर्दने ॥ ६१ ॥
शय्यासनैकप्रियतानिद्रातन्द्र्यादयोऽपि च ।

स्वभावश्रमाभ्यां यथा—

'मुहुरिति वनविभ्रमाभिषङ्गा-
दतमि तदा नितरां नितम्बिनीभिः ।
मृदुतरतनवोऽलसाः प्रकृत्या
चिरमपि ताः किमुत प्रयासभाजः ॥'

सौहित्यं भोजनतृप्तिः । तेन यथा—

'त्रैलोक्याभयलग्नकेन भवता वीरेण विस्मारित-
स्तज्जीमूतमुहूर्तमण्डनधनुःपाण्डित्यमाखण्डलः ।
किञ्चाजस्रमखार्पितेन हविषा सम्फुल्लमांसोल्लस-
त्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते ॥'

अत्र मेदोवृद्ध्या शक्रस्य सौहित्यम् । तत्कृतमालस्यं कथं वर्तत इत्यनेन वागारम्भेण व्यज्यते ।

---

१. 'णिकाया वि' ग घ पाठ..

गर्भनिर्भरतया यथा—

'आसनैकप्रियस्यास्याः सखीगात्रावलम्बिनः।
गर्भालसस्य वपुषो भारोऽभूत् स्वाङ्गधारणम् ॥'

अथ जाड्यं—

जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टार्थयोः श्रुतेः ॥ ६२ ॥
दृष्टेर्वा विरहादेश्च क्रियास्तत्रानिमेषता।
अश्रुतिः पारवश्यं च तूष्णींभावादयोऽपि च ॥ ६३ ॥

इष्टश्रुतेर्यथा—

'प्रियेऽपरा यच्छति वाचमुन्मुखी
निबद्धदृष्टिः शिथिलाकुलोच्चया।
समादधे नांशुकमाहितं वृथा
न वेद पुष्पेषु च पाणिपल्लवम् ॥'

अत्र प्रियवाक्यश्रवणजनितजाड्यमनिमेषत्वादिना व्यज्यते।

प्रियदर्शनाद् यथा—

*'एहिइ सो[1] अ[2] प्पोसिओ अहं[3] च कुंव्वेअ[4] सो वि अणुणेज्ज।
इह चिन्तेन्ती वहुआ दट्ठूण पिअं ण किम्पि सम्मरइ ॥'

---

१. 'स,' २. 'सो पवुत्तो अह' क पाठ. ३. 'अ' ख. पाठ. ४. 'कुप्पेमि सो' क. पाठः.

---

* एष्यति स च प्रोषितोऽह च कुप्येय सोऽप्यनुनेष्यति।
इति चिन्तयन्ती वधूर्दृष्ट्वा प्रिय न किमपि सस्मरति ॥

R

अत्र प्रियदर्शनजनितं जाड्यं पूर्वचिन्तितक्रियाविस्मरणेन व्यज्यते ।

अप्रियश्रवणाद् यथा—

†'आपुच्छन्तस्स वहू गमिदुं दइअस्स सुणिअ अद्धोत्तिम् ।
अणुमण्णिदुं ण जाणइ ‡णिवारेदुं अ परवसा उवह ॥'

अनिष्टदर्शनाद् यथा ममैव—

§ससुरेण ढज्जमाणे घरणिअडभवे णिउञ्जपुञ्जम्मि ।
सुण्हा न सुणइ सुण्णा बहुसो कहिदं वि ससुराण ॥'

वियोगाद् यथा—

'पप्रच्छ पृष्टमपि गद्गदिकार्तकण्ठः
शुश्राव नोक्तमपि शून्यमनाः स किञ्चित् ।
सस्मार न स्मृतमपि क्षणमात्मकृत्यं
श्रुत्वाहमित्युपगतोऽपि न संविवेद ॥'

अत्र सीताविरहजनितं रामस्य जाड्यं पुनःप्रश्नश्रुत्यादिभिरवगम्यते ।

---

१. 'त्ववग' क. पाठः.

---

† आपृच्छमानस्य वधूर्गन्तुं दयितस्य श्रुत्वार्धोक्तिम् ।
अनुमन्तु न जानाति निवारयितु च परवशा पश्यत ॥

‡ 'ण वारिदु परवसा' इति पाठो भवेत् ।

§ श्वशुरेण दह्यमाने गृहनिकटभवे निकुञ्जपुञ्जे ।
स्नुषा न शृणोति शून्या बहुशः कथितमपि श्वश्र्वा ॥

अथ व्रीडा —

अकार्यकरणावज्ञास्तुतिनूतनसङ्गमैः ।
प्रतीकाराक्रियाद्यैश्च व्रीला त्वनतिधृष्टता ॥ ६४ ॥
तत्र चेष्टा निगू[1]ढोक्तिराधोमुख्यविचिन्तने ।
अनिर्गमो बहिः क्वापि दूरादेवावगुण्ठनम् ॥ ६५ ॥
न[2]खानामञ्चलैर्भूमिलेखनं चैवमादयः ।

अकार्यकरणाद् यथा —

'गुर्वादेशादेव निर्मीयमाणो
नाधर्माय स्त्रीवधो[3]ऽपीप्सितोऽयम् ।
अद्य स्थित्वा श्वो गमिष्यद्भिरल्पै-
र्लज्जास्माभिर्मीलिताक्षैर्जितैव ॥'

अवज्ञया यथा —

'अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम् ।
अन्योन्यस्यापि जिह्रीमः प्रागेव सहवासि[4]नाम् ॥'

स्तुत्या यथा —

'तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीलादवनतं शिरः ॥'

नवसङ्गमेन यथा —

'पटालग्ने पत्यौ नमयति मुखं जातविनया
[5]हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।

१. 'रोधोक्ति', २. 'खनिस्तोदनं भूमि' ग. घ. चं. पाठः. ३ 'पि स्थितो', ४. 'मि॰ ॥' क ख. पाठः ५. 'दृढाश्ले' क पाठः

न शक्ताप्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिभोगे[1] नववधूः ॥'

प्रतीकाराकरणाद् यथा—

'उद्वृत्तारिकृताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः
पार्थस्याकृतशात्रवप्रतिकृतेरन्तश्शुचा मुह्यतः ।
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयो
हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद् बहिः ॥'

अथावहित्था—

अवहित्थाकारगुप्तिर्जैह्म्य[2]प्राभवनीतिभिः ॥ ६६ ॥
लज्जासाध्वसदाक्षिण्यप्रागल्भ्यापजयादिभिः ।
अन्यथाकथनं मिथ्याधैर्यमन्यत्र वीक्षणम् ॥ ६७ ॥
[3]कथाभङ्गादयोऽप्यस्यामनुभावा भवन्त्यमी ।

जैह्म्याद् यथा—

'लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाच्छलेन ॥'

प्राभवाद् यथा—

'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥'

नीत्या यथा—

'बहिः सर्वाकारप्रवणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।

१. 'ह्रासे न' ख पाठ.. २. 'जिह्मप्रा' ख च. पाठः ३. 'त' च पाठः.

जनं विद्वानेकः सकलमतिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते ॥'

लज्जया यथा—

'चिक्षेप लक्ष्मीर्निटिलान्नखाग्रैः प्रस्वेदवार्यातपमाक्षिपन्ती ।
जुगोप देवोऽपि स रोमहर्षं जडाब्धिवाताहतिकैतवेन ॥'

साध्वसेन यथा—

'श्रुत्वा दुस्स[1]हमद्भुतं च मिथिलावृत्तान्तमन्तःपत-
च्चिन्तानिह्नवसावहित्थवदनस्तद्दिग्वित[2]ीर्ण[3]स्मितः ।
हेलाकृष्टसुरावरोधरमणीसीमन्तसन्तानक-
स्रग्वासोज्ज्वलपाणिरप्यवति मां वत्सो न लङ्केश्वरः ॥'

दाक्षिण्याद् यथा—

'त्वय्यर्धासनभाजि किन्नरग[4]णोद्गीतैर्भवद्विक्रमै-
रन्तस्सम्भृतमत्सरोऽपि भगवानाकारगुप्तौ कृती ।
उन्मीलद्भवदीयदक्षिणभुजारोमाञ्चविद्धोच्चल-
द्बाष्पैरेव विलोचनैरभिनयत्यानन्दमाखण्डलः ॥'

प्रागल्भ्येन यथा—

'एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद् दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥'

---

१. 'श्श्रवम' क. पाठ.. २. 'की' ख. ग. पाठः. ३. 'र्णास्थित' ग. पाठः.
४. 'बधूणांते' क. पाठः.

अथ स्मृतिः—

स्वास्थ्यचिन्तादृढाभ्याससदृशालोकनादिभिः ॥ ६८ ॥
स्मृतिः पूर्वानुभूतार्थप्रतीतिस्तत्र विक्रियाः ।
कम्पनोद्वहने मूर्ध्नो भ्रूविक्षेपादयोऽपि च ॥ ६९ ॥

स्वास्थ्येन यथा—

'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥'

चिन्तया यथा—

'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥'

दृढाभ्यासेन यथा—

'तद् वक्त्रं नयने च ते स्मितसुधामुग्धं च तद् वाचिकं
सा वेणी स भुजक्रमोऽतिसरलो[1] लीलालसा सा गतिः ।
तन्वी सेति च सेति सेति सततं तद्ध्यानबद्धात्मनो
निद्रा नो न रतिर्नचापि विरतिः शून्यं मनो वर्तते ॥'

सदृशालोकनेन यथा—

'आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥'

---

१. 'पि सरला ला' क. ग. पाठः.

अथ वितर्कः—

ऊहो वितर्कः सन्देहविमर्शप्रत्ययादिभिः ।
जनितो निर्णयान्तः स्यादसत्यः सत्य एव वा ॥ ७० ॥
तत्रानुभावाः स्युरमी भ्रूशिरःकम्पनादयः ।

सन्देहप्रत्ययाद् यथा—

'अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे ।
इन्दौ यद् दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत् सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥'

अत्र चन्द्रगतकलङ्कविषये बहुविधप्रतिपत्त्या सन्दिहानस्य चन्द्र(मि?गि)लितान्धकारोऽयमित्यसत्यात्मकस्तर्को भवति ।

विमर्शो विचारः । तेन यथा—

'गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किन्न्वेतत् स्यात् किमन्यदतोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥'

अत्र माधवगतां चिन्तामुपलभ्य किमत्र कारणमिति विमृशता मकरन्देन मन्मथनिबन्धन एवायं भाव इति सम्यङ्निर्णयान्तो वितर्कः ।

अथ चिन्ता —

इष्टवस्त्वपरिप्राप्तेरैश्वर्यभ्रंशनादिभिः ॥ ७१ ॥
चिन्ता ध्यानात्मिका तस्यामनुभावा मता इमे ।
कार्श्याधोमुख्यसन्तापनिःश्वासोच्छ्वसनादयः ॥ ७२ ॥

इष्टवस्त्वलाभेन यथा —

*'ईसिवळिओणआ से कूणिअपह्मन्ततारअत्थिमिआ ।
दिट्ठी कवोळवाळी णिहिआ करपळ्ळवे मणो सुण्णं ॥'

ऐश्वर्यनाशेन यथा —

'यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥'

अथ मतिः —

नानाशास्त्रार्थमथनादर्थनिर्धारणं मतिः ।
तत्र चेष्टास्तु कर्तव्यकरणं संशयच्छिदा ॥ ७३ ॥
शिष्योपदेशभ्रूक्षेपावूहापोहादयोऽपि च ।

यथा —

'दशरथकुले सम्भूतं मामवाप्य धनुर्धरं
दिनकरकुलास्कन्दी कोऽयं कलङ्कनवाङ्कुरः ।
इति हि वनितामेनां हन्तुं मनो विचिकित्सते
यदधिकरणं धर्मस्थेयं तवैव वचांसि नः ॥'

अथ धृतिः —

ज्ञानविज्ञानगुर्वादिभक्तिनानार्थसिद्धिभिः ॥ ७४ ॥
लज्जादिभिश्च चित्तस्य नैःस्पृह्यं धृतिरुच्यते ।

---

* ईषद्वलितावनतास्याः कूणितपक्ष्मान्ततारका स्तिमिता ।
दृष्टिः कपोलपाली निहिता करपल्लवे मनः शून्यम् ॥

अत्रानुभावा विज्ञेयाः प्राप्तार्थो [illegible]वस्तथा ॥ ७५ ॥

अप्राप्तातीतनष्टार्था[1]नभिसंशोध [illegible]दयः ।

ज्ञानाद् यथा —

'अशीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥'

विज्ञानाद् यथा —

'[2]अस्त्यद्यापि च[3]तुस्समुद्रपरिघापर्यन्तमुर्वीतलं
[4]सन्ति ज्ञानविदग्धगोष्ठिचतुराः केचित् क्वचिद् भूभुजः ।
तत्रैकोऽपि निरादरो यदि भवे[5]देको भवेत् सादरो
वाग्देवी वदनाम्बुजे [6]वसति चेत् को नाम दीनो जनः ॥'

गुरुभक्त्या यथा —

'तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा
यत् संवाहयतः सुखानि चरणौ तातस्य किं राज्यके ।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तन्नास्ति कश्चिद् गुणः ॥'

अत्र पितृभक्त्या राज्येऽपि नैःस्पृह्यं जीमूतवाहनस्य ।

नानार्थसिद्ध्या यथा —

'क्रोधान्धं सकलं हतं रिपुबलं पञ्चाक्षताः पाण्डवाः
पाञ्चाल्या मम दुर्नयेन विहितस्तीर्णो निकारोदधिः ।

---

१. 'न्नहि सशोचना' च पाठ· २. 'आसाद्या' ग. पाठ. ३ 'तत्समु', ४. 'न्त्यन्येऽपि च तत्र तत्र विदुषा गोष्ठीषु सक्ता नृपाः ।', ५ 'दन्यो भ', ६. 'यदि भवेत् को' क. पाठः.

त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥'

अथ हर्षः—

मनोरथस्य लाभेन सिद्ध्या योग्यस्य वस्तुनः॥ ७६ ॥
मित्रसङ्गमदेवादिप्रसादादेश्च कल्पितः ।
मनःप्रसादो हर्षः स्यादत्र नेत्रास्यफुल्लता ॥ ७७ ॥
प्रियाभाषणमाश्लेषः पुलकानां प्ररोहणम् ।
स्वेदोद्गमश्च हस्तेन हस्तसंपीडनादयः ॥ ७८ ॥

मनोरथस्य लाभेन यथा—

'निवातपद्मास्तिमितेन चक्षुषा
नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद्
गुरुः प्रहर्षः प्रबभूव नात्मनि ॥'

योग्यवस्तुसिद्ध्या यथा—

'स रागवानरुणतलेन पाणिना
पुलोमजापदतलयावकैरिव ।
हरिं हरिः स्तनितगभीरहेषितं
मुखे निरामिषकठिने ममार्ज तम् ॥'

अत्रोच्चैश्श्रवसो लाभेन देवेन्द्रस्य हर्षः ।

मित्रसङ्गमाद् यथा—

'इभकुम्भतुङ्गकठिनेतरेतरस्तनभारदूरविनिवारितोदराः ।
परिफुल्लगण्डयुगलाः परस्परं परिरेभिरे कुकुरकौरवस्त्रियः ॥'

मित्रसङ्गमः पूज्यादिसङ्गमादीनामुपलक्षणम् । पूज्यसङ्गमेन यथा—

'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥'

देवप्रसादाद् यथा—

'तस्याः प्रसन्नेन्दुमुखः प्रसादं
गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै
शशंस वाचा पुनरुक्तयेव ॥'

आदिशब्दाद् गुरुराजप्रसादादयः । गुरुप्रसादाद् यथा—

'अस्मद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रवि-
र्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती ।
अद्य स्वं बहुमन्यते सहचरैरस्माभिराखण्डलो
येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः ॥'

राजप्रसादाद् यथा—

'प्रीतिरस्य ददतोऽभवत् तथा
येन तत्प्रियचिकीर्षवो नृपाः ।
स्पर्शितैरधिकमागमन्मुदं
नाधिवेश्मनिहितैरुपायनैः ॥'

अथौत्सुक्यं—

कालाक्षमत्वमौत्सुक्यमिष्टवस्तुवियोगतः ।
तद्दर्शनाद् रम्यवस्तुदिदृक्षादेश्च तत्क्रिया[1]: ॥ ७९ ॥

---

१. 'विक्रिया ॥' च. पाठः.

त्वरानवस्थिती शय्यास्थितिरुत्थानचिन्तने ।
शरीरगौरवं निद्रातन्द्रानिःश्वसितादयः ॥ ८० ॥

इष्टवस्तुवियोगाद् यथा—

'संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥'

इष्टवस्तुदर्शनाद् यथा—

'आयाते दयिते मनोरथशतैर्नीत्वा कथञ्चिद् दिनं
वैदग्ध्यापनयाज्जडे परिजने दीर्घां कथां कुर्वति ।
दष्टास्मीत्यभिधाय सत्वरतरं व्याधूय चेलाञ्चलं
तन्वङ्ग्या रतिकातरेण मनसा दीपोऽपि[1] निर्वापितः ॥'

रम्यदिदृक्षया यथा—

'कृतावशेषेण सविभ्रमेण निष्कीलितेनाध्वनि पूरितेन ।
प्रसाधनेनाच्युतदर्शनाय पुरस्त्रियः शिश्रियिरे गवाक्षान् ॥'

अथौग्र्यम्—

अपराधावमानाभ्यां धैर्यादिग्रहणादिभिः ।
असत्प्रलापनाद्यैश्च कृतं चण्डत्वमुग्रता ॥ ८१ ॥
क्रियास्तत्रास्यनयनरागो बन्धनताडने ।
शिरसः कम्पनं स्वेदवधनिर्भर्त्सनादयः ॥ ८२ ॥

---

१. 'नीत. प्रदीपः शमम् ॥' क पाठ..

अपराधाद् यथा—

'प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'

अत्र मालतीनिकाररूपापराधाद् माधवस्यौग्र्यम् ।

अवमानाद् यथा —

'अज्ञातपूर्वां द्विषतामवज्ञां विज्ञापयन्तं प्रतिघान्धचेताः ।
आज्ञाहरं प्राज्ञविनिन्द्यकर्मा यज्ञाशिवैरी गदया जघान॥

धैर्यादिग्रहणाद् यथा —

'भुजविटपमदेन व्यर्थमन्धंभविष्णु-
र्धिगपसरसि चोरंकारमाक्रुश्यमानः ।
त्वदुरसि विदधातु स्वामवस्कारकेलिं
कुटिलकरजकोटिक्रूरकर्मा जटायुः ॥'

असत्प्रलापाद् यथा —

'कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥'

अथामर्षः —

अधिक्षेपावमानाद्यैः क्रोधोऽमर्ष इतीर्यते ।
तत्र स्वेदशिरःकम्पावाधोमुख्यविचिन्तने ॥ ८२ ॥
उपायान्वेषणोत्साहव्यवसायादयः क्रियाः ।

अधिक्षेपाद् यथा—

'इति भीष्मभाषितवचोर्थमधिगतवतामिव क्षणात् ।
क्षोभमगमदतिमात्रमसौ शिशुपालपक्षपृथिवीभृतां गणः ॥'

अवमानाद् यथा—

'ध्वंसेत हृदयं सद्यः परिभूतस्य मे परैः ।
यद्यमर्षः[1] प्रतीकारं भुजालम्बं न लम्भयेत्[2] ॥'

अथासूया—

परसौभाग्यसम्पत्तिविद्याशौर्यादिहेतुभिः ॥ ८४ ॥
गुणेऽपि दोषारोपः स्यादसूया तत्र विक्रिया ।
मुखोपवर्तनं[3] गर्हाभ्रूभेदानादरादयः ॥ ८५ ॥

परसौभाग्येन यथा—

'मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि! भाजनमीदृशानां
वैरी न चेद् भवति वेपथुरन्तरायः ॥'

परसम्पत्त्या यथा—

'लोकोपकारिणी लक्ष्मीः सतां विमलचेतसाम् ।
तथापि तां विलोक्यैव दूयन्ते दुष्टचेतसः ॥'

परविद्यया यथा—

'प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः[4] ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥'

---

१ 'र्षप्रतीकारो भु' क पाठ.. २ 'म्व' ग. पाठः. ३. 'खा' च. पाठः. ४. 'द्धि' घ. पाठ

यथा वा—

'गुणाधारे गौरे यशसि परिपूर्णे विलसति
प्रतापे चामित्रान् दहति तव शिङ्गक्षितिपते ! ।
नवैव द्रव्याणीत्यकथयदहो मूढतमधी-
श्चतुर्धा तेजोऽपि व्यभजत कणादो मुनिरपि ॥'

अत्र प्रौढकविसमयप्रसिद्धमार्गानुसारिणो वक्तुः परिमितद्रव्यवादिनि कणादे महत्यसूया मूढतमधीरिति वागारम्भेण व्यज्यते ।

परशौर्येण यथा—

'स्त्रीमात्रं ननु ताटका भृगुसुतो रामस्तु विप्रः शुचि-
र्मारीचो मृग एव भीतिभवनं वाली पुनर्वानरः ।
भोः काकुत्स्थ! विकत्थसे किमथवा वीरो जितः कस्त्वया
दोर्दर्पस्तु तथापि ते यदि समं कोदण्डमारोपय ॥

अथ चापलं—

रागद्वेषादिभिश्चित्तलाघवं चापलं भवेत् ।
चेष्टास्तत्राविचारेण परिरम्भावलम्बने ॥ ८६ ॥
निष्कासनोक्तिपारुष्यताडनाज्ञापनादयः ।

रागेण यथा—

'विजनमिति बलादमुं गृहीत्वा
क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या ।
अभिपतितुमना लघुत्वभीते-
रभवदमुञ्चति वल्लभेऽतिगुर्वी ॥'

**द्वेषेण यथा—**

'पादाघातैः सुरभिरभितः सत्वरं ताडनीयो
गाढामोदं[1] मलयमरुतः शृङ्खलादाम दत्त।
कारागारे क्षिपत तरसा पञ्चमं रागराजं
चन्द्रं चूर्णीकुरुत च शिलापट्टके पिष्टबिम्बम्[2] ॥'

अत्र सीताविरहेण रावणस्य वसन्तादिविषयद्वेषेण तत्तदधिदेवतानां ताडनाज्ञापनादिभिरनुभावैश्चापल्यं द्योत्यते।

**अथ निद्रा—**

मदस्वभावव्यायामनिश्चिन्तत्वश्रमादिभिः ॥ ८७ ॥
मनोनिमीलनं निद्रा चेष्टास्तत्रास्यगौरवम्।
आघूर्णमाननेत्रत्वमङ्गानां परिवर्तनम्[3] ॥ ८८ ॥
निःश्वासोच्छ्वासने सन्नगात्रत्वं नेत्रमीलनम्।
शरीरस्य च सङ्कोचो जाड्यं चेत्येवमादयः ॥ ८९ ॥

**मदाद् यथा—**

'यस्मिन् महीं शासति वाणिनीनां
निद्रां विहारार्धपथे गतानाम्।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम् ॥'

**स्वभावाद् यथा—**

'उत्तानामुपधाय बाहुलतिकामेकामपाङ्गाश्रया-
मन्यामप्यलसां निधाय विपुलाभोगे नितम्बस्थले।

---

१. 'म्रेड म' क, 'मेढ पाठ २ 'पेषम् ॥' क. पाठः. ३ 'मर्दन' च. पाठः.

नीवीं किञ्चिदिव श्लथां विदधती निःश्वासमुन्मुञ्चती
तल्पोत्पीडनतिर्यगुन्नतकुचा निद्राति शातोदरी ॥'

व्यायामाद् यथा—

'अलसवलितमुग्धान्यध्वसम्पातखेदात्
प्रशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥'

नैश्चिन्त्याद् यथा—

'दत्तेन्द्राभयदक्षिणाद्भुतभुजासम्भारगम्भीरया
त्वद्वृत्त्या शिथिलीकृतस्त्रिभुवनत्राणाय नारायणः।
अन्तस्तोषतुषारसौरभमयश्वासानिलापूरण-
प्राणोत्तुङ्गभुजङ्गतल्पमधुना भद्रेण निद्रायते ॥'

श्रमाद् यथा—

'केवलं प्रियतमादयालुना
ज्योतिषामवनतासु पङ्क्तिषु ॥
तेन तत्परिगृहीतवक्षसा
नेत्रमीलनकुतूहलं कृतम् ॥'

अथ सुप्तिः—

उद्रेक एव निद्रायाः सुप्तिः स्यात् तत्र विक्रिया।
इन्द्रियोपरतिर्नेत्रमीलनं स्रस्तगात्रता ॥९०॥
उत्स्वप्नायितनैश्चल्यश्वासोच्छ्वासादयो मताः ।

---

१. वेगाङ्कुरैस्तल्पो', २ 'ङितति' क. पाठः

यथा—

'अव्यासुरन्तःकरुणारसार्द्रा
निसर्गनिर्यन्निगमान्तगन्धाः ।
श्वासानिलास्त्वां स्वपतो मुरारेः
शय्याभुजङ्गेन्द्रनिपीतशेषाः ॥'

अथ बोधः—

स्वप्नस्पर्शननिः(श्वास ? स्वान)निद्रासंपूर्णतादिभिः ॥
प्रबोधश्चेतनावाप्तिश्चेष्टास्तत्राक्षिमर्दनम् ।
शय्याया मोक्षणं बाहुविक्षेपोऽङ्गुलिमोटनम् ॥ ९२ ॥
शिरःकण्डूयनं चाङ्गवलनं चैवमादयः ।

स्वप्नाद् यथा—

'त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवा-
गसत्यकण्ठार्पितबाहुबन्धना ॥'

स्पर्शनाद् यथा—

'आघ्राय चाननमधिस्तनमायताक्ष्याः
सुप्तं तदा त्वरितकेलिभुवा श्रमेण ।
प्राभातिकः पवन एष सरोजगन्धी
प्राबोधयन्मणिगवाक्षसमागतो माम् ॥'

निःस्वानाद् यथा—

'उषसि स गजयूथकर्णतालैः
पटुपटहध्वनिभिर्विनीतनिद्रः ।

---

१. 'स्या' क. ख. ग. पाठः.

अरमत मधुरस्वराणि शृण्वन्
विहगविकूजितवन्दिमङ्गलानि ॥'

निद्रासम्पूर्त्या यथा—

'ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥'

उत्तमाधममध्येषु सात्त्विका व्यभिचारिणः ॥ ९३ ॥
विभावैरनुभावैश्च वर्णनीया यथोचितम् ।
उद्वेगस्नेहदम्भेर्ष्याप्रमुखाश्चित्तवृत्तयः ॥ ९४ ॥
उक्तेष्वन्तर्भवन्तीति न पृथक्त्वेन दर्शिताः ।

तथाहि—परप्रतारणरूपस्य दम्भस्य जिह्मतावहित्थयोरन्तर्भावः। चित्तद्रवतालक्षणस्य स्नेहस्य हर्षेऽन्तर्भावः। स्वविषयदानमानाद्यमर्षणरूपाया ईर्ष्याया अमर्षेऽन्तर्भावः । परविषयायास्त्वसूयायाम् । उद्वेगस्य तु निर्वेदविषादादिषु यथोचितमन्तर्भावः । इत्यादि द्रष्टव्यम् । तथाच भावप्रकाशिकाकारः—

'अन्येऽपि यदि भावाः स्युश्चित्तवृत्तिविशेषतः ।
अन्तर्भावस्तु सर्वेषां द्रष्टव्यो व्यभिचारिषु ॥'

इति ।

विभावा अनुभावाश्च ते भवन्ति परस्परम् ॥ ९५ ॥
कार्यकारणभावस्तु ज्ञेयः प्रायेण लोकतः ।

तथाहि—सन्तापस्य दैन्यं प्रति विभावत्वं ग्लानिं प्रत्यनुभावत्वं च । प्रहारस्य प्रलयमोहौ प्रति विभावत्वम्

---

१. 'वाश्चानु' क. ख. ग. पाठः.

औग्र्यं प्रत्यनुभावत्वं च। विषादस्योत्पातावेगं प्रत्यनुभावत्वं स्तम्भं प्रति विभावत्वम्। व्याधेर्ग्लानिस्तम्भप्रलयादीन् प्रति विभावत्वम्।

स्वातन्त्र्यात् पारतन्त्र्याच्च द्वेधामी व्यभिचारिणः ॥
परपोषकतां प्राप्ताः परतन्त्रा इतीरिताः।
तदभावे स्वतन्त्राः स्युर्भावा इति च ते स्मृताः ॥

तत्र पारतन्त्र्येण निर्वेदो यथा—

'कुर्युः शस्त्रकथाममी यदि मनोर्वंशे मनुष्याङ्कुराः
स्याच्चेद् ब्रह्मगणोऽयमाकृतिगणस्तत्रेष्यते चेद् भवान्।
सम्राजां समिधां च साधकतमं धत्ते छिदाकारणं
धिङ्मौर्वीकुशकर्षणोल्बणकिणग्रन्थिर्ममायं करः ॥'

इत्यत्र निर्वेदस्य क्रोधाङ्गत्वम्। निर्वेदस्य स्वतन्त्रत्वं यथा—

'प्राप्ताः श्रियः सकलकामदुघास्ततः किं
सम्मानिताश्च विभवैः सुहृदस्ततः किम्।
न्यस्तं पदं शिरसि विद्विषतां ततः किं
कल्पं स्थितं तनुभृतामसुभिस्ततः किम् ॥'

इत्यादि। अत्र निर्वेदस्यानन्याङ्गत्वात् स्वतन्त्रत्वम्। ननु निर्वेदस्य शान्तरसस्थायित्वं कैश्चिदुक्तम्। कथमस्यानन्यो-

---

१. 'त' क. पाठः.

पकरणत्वमिति चेद्, उच्यते। सति खलु ग्रामे सीमासम्भावना। स्थायित्वं नाम संस्कारपाटवेन भावस्य मुहुर्मुहुर्नवीभावः। तेन निर्वेदवासनावासिते भावकचेतसि नैष्फल्येनाभिमतेषु विभावादिषु तत्सामग्रीफलभूतस्य निर्वेदस्योत्पत्तिरेव न सङ्गच्छते, किं पुनः स्थायित्वम्। किञ्चासति निर्वेदस्थायिनि शान्तरूपो भावकानामास्वादश्चित्रगतकदलीफलरसास्वादलम्पटानां राजशुकानां विवेकसहोदरो भवेदिति कृतं संरम्भेण। विषादस्य परतन्त्रत्वं यथा—

'वारं वारं तिरयति दृशामुद्गतो बाष्पपूर-
स्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि॥'

अत्र विषादस्य शृङ्गाराङ्गत्वम्। स्वतन्त्रत्वं यथा—

'सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः॥'

इत्यत्र विषादस्यानन्याङ्गत्वम्। एवमन्येषामपि स्वतन्त्रत्वपरतन्त्रत्वे तत्र तत्रोहनीये॥

आभासता भवेदेषामनौचित्यप्रवर्तिनाम्।

---

१. 'स्पृष्टोना' ग. घ. पाठः.

असत्यत्वादयोग्यत्वादनौचित्यं द्विधा भवेत् ॥ ९८ ॥
असत्यत्वकृतं तत् स्यादचेतनगतं तु यत् ।

यथा —

'कस्त्वं भोः! कथयामि दैवहतकं मां विद्धि शाकोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं श्रूयताम् ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
नच्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे ॥'

अत्र वृक्षविशेषत्वादचेतने शाकोटके चित्तविकारस्यासम्भवादनुचितो निर्वेदोऽयमाभासत्वमापद्यते ।

अयोग्यत्वकृतं प्रोक्तं नीचातिर्यङ्नराश्रयम् ॥ ९९ ॥

तत्र नीचातिर्यग्गतं यथा —

'वेलातटे प्रसूयेथा मा भूः शङ्कितमानसा ।
मां जानाति समुद्रोऽयं टिट्टिभं साहसप्रियम् ॥'

अत्र यदि समुद्रवेलायां प्रसूये, तर्हि उद्वेलकल्लोलमालादिभिर्ममापत्यानि हृतानि भवेयुरिति शङ्कितायां निजगृहिण्यां कश्चिट्टिट्टिभः पक्षिविशेषो गर्वायते । तदयं गर्वो नीचतिर्यग्गतत्वादाभासो नातीव स्वदते । नीचनराश्रयो

यथा —

'अभ्युत्तानशयालुना करयुगप्राप्तोपधानश्रिया
गन्धूरस्य तरोस्तले घुटपुटध्वानानुसन्धायिभिः ।

---

१. 'ब' ख. पाठः.

दीर्घैः श्वासभरैः सफूत्कृतिशतैरास्फोटितोष्ठद्वयं
तत्पूर्वं कृषिकर्मणि श्रमवता क्षुद्रेणनिद्रायते ॥'

अत्र नीचगता निद्रा भावकेभ्यो नातिस्वदते[1] ।

उत्पत्तिसन्धिशाबल्यशान्तयो व्यभिचारिणाम् ।
दशाश्चतस्रं[2] एव स्युरुत्पत्तिर्भावसम्भवः ॥ १०० ॥

यथा —

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥'

अत्र लज्जाया हर्षस्य वा समुत्पत्तिः ।

सरूपमसरूपं वा भिन्नकारणकल्पितम् ।
भावद्वयं मिलति चेत् स सन्धिरिति गीयते ॥ १०१ ॥

सरूपयोः सन्धिर्यथा —

'अरिव्रजानामनपोतशिङ्गखड्गप्रहारैरवनिं गतानाम् ॥
प्रियाजनाङ्कप्रहिताङ्गकानां भवन्ति नेत्रान्तनिमीलनानि ॥'

अत्र नायकखड्गप्रहारप्रियाजनाङ्गस्पर्शाभ्यां कल्पितयोः प्रतिनायकेषु मोहयोः सन्धिर्नेत्रान्तनिमीलनेन व्यज्यते।

असरूपयोः सन्धिर्यथा —

'श्रीशिङ्गभूपप्रतिनायकानां स्विद्यन्ति गात्राण्यतिवेपितानि ।
तत्तूर्यसंवादिषु गर्जितेषु प्रियाभिरालम्बितकन्धराणाम् ॥'

---

१. 'तीव स्व' ख. पाठः. २. 'स्रस्तत्र स्यादुत्प' क. ख. ग. पाठ..

अत्र गर्जितेषु नायकसन्नाहनिस्साणशङ्कयाङ्कुरितस्य प्रतिनायकानां त्रासस्य प्रियालिङ्गनतरङ्गितस्य[1] हर्षस्य च स्वेदवेपथुसादृश्यकल्पितसंश्लेषः सन्धिः ।

अत्यारूढस्य भावस्य विलयः शान्तिरुच्यते ।

यथा —

'शुद्धान्तस्य निवारितोऽप्यनुनयैर्निश्शङ्कमङ्कूरितो
वृद्धामात्यहितोपदेशवचनै रुद्धोऽपि वृद्धिं गतः ।
मानोद्रेकतरुः प्रतिक्षितिभुजामामूलमुन्मूल्यते
वाहिन्यामनपोतशिङ्गनृपतेरालोकितायामपि ॥'

अत्र हितोपदेशानादराधिरूढस्य प्रतिनायकगतस्य गर्वस्य शान्तिरामूलमुन्मूल्यत इति वागारम्भेण व्यज्यते ॥

शबलत्वं तु भावानां संमर्दः स्यात् परस्परम् ॥ १०२ ॥

यथा —

'को वा जेष्यति सोमवंशतिलकानस्मान् रणप्राङ्गणे

गर्वः ।

हन्तास्मासु पराङ्मुखो हतविधिः

विषादासूये ।

किं दुर्गमध्यास्महे ।

चिन्ता ।

अस्मत्पूर्वनृपानसौ निहतवान्

---

१. 'ङ्गितस्य' ख, पाठः.

स्मृत्यमर्षौ ।

दीर्घान् धिगस्मद्भुजान्

निर्वेदः ।

किं वाक्यैरनपोतशिङ्गनृपतेः सेवैव कृत्यं परम् ॥'

मतिः ।

अत्र गर्वविषादासूयाचिन्तास्मृत्यमर्षनिर्वेदमतीनां संमर्दो भावशाबल्यमित्युच्यते ।

दिगन्तरालसञ्चारकीर्तिना शिङ्गभूभुजा ।
एवं सञ्चारिणः सर्वे सप्रपञ्चं निरूपिताः ॥ १०३ ॥

अथ स्थायिनः —

सजातीयविजातीयैर्भावैर्ये त्वतिरस्कृताः[1] ।
क्षीराब्धिवन्नयन्त्यन्यान् स्वात्मत्वं स्थायिनो हि ते ॥

भरतेन च ते कथिता रतिहासोत्साहविस्मयक्रोधाः ।
शोकोऽथ जुगुप्सा भयमित्यष्टौ लक्ष्म वक्ष्यते तेषाम् ॥

तत्र रतिः —

यूनोरन्योन्यविषया स्थायिनीच्छा रतिर्भवेत् ।
निसर्गेणाभियोगेन[2] संसर्गेणाभिमानतः[3] ॥ १०६ ॥

उपमाध्यात्मविषयैरेषा स्यात् तत्र विक्रियाः ।
कटाक्षपातभ्रूक्षेपप्रियवागादयो मताः ॥ १०७ ॥

तत्र निसर्गेण रतिर्यथा —

'अलं विवादेन यथा श्रुतं त्वया
तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थिरं
न कामवृत्तिर्वचनीयमीक्षते ॥'

---

१. 'सजातकी' क. पाठ· २. 'मानेन', ३. 'योगतः' च. पाठ.

अत्र रूपादिदृष्टकारणनिरपेक्षा पार्वत्या रतिर्जन्मान्तरवासनारूपा निसर्गादेव भवति ।

अभियोगोऽभिनिवेशः । तदेकपरत्वमिति यावत् । तेन यथा —

'तन्मे मनः क्षिपति यत् सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया ।
त्रस्तैकहायनकुरङ्गविलोलदृष्टि-
राश्लेषयत्यमृतसंवलितैरपाङ्गैः ॥'

अत्रोत्तरीयस्खलनादिसूचितेन मदयन्तिकाप्रेमाभियोगेन मकरन्दस्य तत्र रतिरुत्पद्यते ।

संसर्गेण यथा —

'उत्पत्तिर्देवयजनाद् ब्रह्मवादी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्तिरस्याः स्नेहं करोति मे ॥'

अत्र देवयजनजनकादिसम्बन्धगौरवेण सीतायां रामस्य रतिः ।

अथाभिमानः । इदमेव मम प्रियं, नान्यदित्यभिप्रायोऽभिमानः । तेन यथा —

'जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्यस्मिन् स एव महोत्सवः ॥'

अत्र माधवस्य विलोचनचन्द्रिकानयनमहोत्सवाद्य-भिमानेनेतररमणीयवस्तुनैःस्पृह्येन च मालत्यां रतिः ।

उपमया यथा—

'अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्छिन्नमाल्यानुकीर्णे
रतिविगलितबन्धे केशहस्ते प्रियायाः ॥'

अत्र मृगयान्तरितापि दशरथस्य प्रियाविषया रति-स्तदीयकेशकलापसदृशकेकिकलापदर्शनेनोत्पद्यते ।

अध्यात्मं स्वात्मप्रामाण्यमात्रम् । तेन यथा—

'कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे चेतः ॥'

अत्र दुष्यन्तस्य निजचित्तसन्तापप्रत्ययेन शापवि-स्मृतायामपि शकुन्तलायां रतिः ।

विषयाः शब्दादयः । तत्र शब्देन यथा—

'सखि ! मे नियतिहतायास्तद्दर्शनमस्तु वा मा वा ।
पुनरपि स वेणुनादो यदि कर्णपथे पतेत् तदेवालम् ॥'

अत्र प्रागदृष्टेऽपि कृष्णे वेणुनादेन कामवल्ल्या रति

स्पर्शेन यथा—

'यदयं रथसंक्षोभादंसेनांसो रथाङ्गसुश्रोण्याः ।
स्पृष्टः सरोमविक्रियमङ्कुरितं( तद् )मनोभवेनेव ॥'

रूपेण यथा —

'अयं रामो नायं स तु जनकधर्मं दलितवा-
नयं कामो नायं स तु मधुमदामोदितमनाः ।
सखि! ज्ञातं सोऽयं युवतिनयनोत्पादनफलं
निदानं भाग्यानां जयति खलु शिङ्गक्षितिपतिः ॥'[1]

अत्र रामादिस्मरणहेतुना नायकरूपातिशयेन कस्याश्चिद् रतिः ।

रसेन यथा —

'हरस्तु किञ्चित्परिवृत्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥'

अत्र यद्यपि संभोगात् प्रागज्ञातस्याधररसस्य रसं प्रति विभावता न संगच्छते, अथापि प्रसिद्धेः संभावितस्य रसस्यैव विभावत्वं बिम्बफलाधरोष्ठ इति पदेन व्यज्यते। अथवा समास्वादितदाक्षायणीबिम्बाधरस्य परमेश्वरस्य तद्रसेनैव जननान्तरसङ्गतायामपि तस्यां रतिः ।

गन्धेन यथा ममैव —

'उन्मीलन्नवमालतीपरिमलन्यक्कारबद्धव्रतै-
रालोलैरलिमण्डलैः प्रतिपदं प्रत्याशमासेवितः ।
अङ्गानामभिजातचम्पकरुचामस्या मृगाक्ष्याः स्फुर-
न्नामोदोऽयमदृष्टपूर्वमहिमा बध्नाति मे मानसम् ॥'

---

१ 'तः ॥ रसे' क. पाठः

अत्र पराशरमुनिप्रसादेन लब्धेन दिव्येन सत्यवतीशरीरसौरभेण शन्तनोस्तस्यां रतिः ।

भोजस्तु संप्रयोगेण रतिमन्यामुदाहरत् ।

यथा—

'उन्नमय्य सकचग्रहमोष्ठं
चुम्बति प्रियतमे हठवृत्त्या ।
ऊंहु मुञ्च म म मेति च मन्दं
जल्पितं जयति बालवधूनाम् ॥'

व्याकृतं च तेनैव—अत्र तर्जनार्थमोक्षणार्थवारणार्थानां मन्दं मन्दं प्रयोगान्मानवत्याः सम्प्रयोगे रत्युत्पत्तिः प्रतीयत इति।

सम्प्रयोगस्य शब्दादिष्वन्तर्भावान्न तन्मतम् ॥ १०८ ॥

तथाहि—उक्तोदाहरणे मानवतीजल्पितस्य शब्दरूपत्वमेव ।

तथाच—

*'आअरपसारिओट्ठं अघडिअणासं अचु[2]म्बिअणिडाकं।
वण्णघिअलिप्पमुहिए तीए परिचुम्बणं ह्मरिमो ॥'

इत्यादिषु चुम्बनादीनामपि स्पर्शेष्वन्तर्भावः ।

अङ्कुरपल्लवकलिकाप्रसूनफलभोगभा[3]गियं क्रमतः ।
प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः ॥ १०९ ॥

अथ प्रेमा—

स प्रेमा भेदरहितं यूनोर्यद् भावबन्धनम् ।

---

१. 'मुञ्च मु' ख. पाठः. २. 'सगअ', ३ 'गि' क पाठः ४. 'ति ॥' ख. पाठः.

---

*आदरप्रसारितोष्ठमघटितनासमचुम्बितनिटिलम् ।
वर्णघृतलिप्तमुखायास्तस्याः परिचुम्बनं स्मरामः ॥

यथा —

'रथाङ्गनाम्नोरिव भावबन्धनं
बभूव यत् प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत् तयोः
परस्परस्योपरि पर्यचीयत ॥'

अत्र भेदकारणे सुतस्नेहे सत्यपि सुदक्षिणादिलीपयो रतेरपरिहाणेन भेदरहितत्वम् ॥

अथ मानः—

यत्तु प्रेमानुबन्धेन स्वातन्त्र्याद्धृदयङ्गमम् ॥ ११० ॥
बध्नाति भावकौटिल्यं सोऽयं मान इतीर्यते ।

यथा—

'व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः
प्रियं जघानोन्नतपीवरस्तनी ॥'

अपराधसम्भावनायामपि प्रेमकल्पितस्वातन्त्र्येणावज्ञा-रूपं चित्तकौटिल्यम् ।

अथ प्रणयः—

'बाह्यान्तरोपचारैर्यत् प्रेम मानोपकल्पितैः ॥ १११ ॥
बध्नाति भावविस्रम्भं सोऽयं प्रणय उच्यते ।

यथा—

'प्रतिश्रुतं द्यूतपणं सखीभ्यो
विवक्षति प्रेयसि कुञ्चितभ्रूः ।
कण्ठं कराभ्यामवलम्ब्य तस्य
मुखं पिधत्ते स्वकपोलकेन ॥'

अत्र भावबन्धना[1]पराधकौटिल्ययोरनुवृत्तौ कण्ठालम्बनादिनोपचारेण विस्रम्भः ।

अथ स्नेहः —

विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः ॥ ११२ ॥
यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ।

दर्शनेन यथा कन्दर्पसम्भवे ममैव—

'उभे तदानीमुभयोस्तु चित्ते
कदुष्णनिःश्वासचरिष्णुकेन ।
एकीकरिष्यन्ननुरागशिल्पी
रागोष्मणैव द्रवतामनैषीत् ॥'

अत्र लक्ष्मीनारायणयोरन्योन्यदर्शनेनान्तःकरणद्रवीभावः ।

स्पर्शनेन यथा —

'गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्री[2]मन्नितम्बाम्बरा ।
मा मा मानद! माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥'

---

१. 'नानाप' क. पाठः. २ 'त्काञ्चीप्रदेशाम्ब' क. ख. पाठः.

स त्रेधा कथ्यते प्रौढमध्यमन्दविभेदतः ॥ ११३ ॥

प्रवासादिभिरज्ञातचित्तवृत्तौ प्रिये जने ।
इतरक्लेशकारी यः स प्रौढः स्नेह उच्यते ॥ ११४ ॥

यथा —

'एतस्मान्मां कुशलिनमभिज्ञानदानाद् विदित्वा
मा कौलीनादसितनयने! मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते ह्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥'

अत्र प्रोषिते यक्षे स्नेहजनितया तदन्यासङ्गशङ्कया प्रियाक्लेशो मय्यविश्वासिनी भूरिति प्रत्याश्वसनेन व्यज्यते ।

अथ मध्यमः —

इतरानुभवापेक्षां सहते यः स मध्यमः ।

यथा —

'किं देव्याः कृतरोषवेगमुषितस्निग्धस्मितं तन्मुखं
किं वा सागरिकां [1]क्रमोद्गतरुषा सन्तर्ज्यमानां [2]तया ।
[3]बद्धानीतमितो वसन्तकमहं किं चिन्तयाम्य[4]प्रभुः
सर्वाकारकृतव्यथः क्षणमपि प्राप्नो(ति?मि) नो निर्वृतिम् ॥'

अत्र सागरिकानु[5]भवापेक्षया राजस्नेहो वासवदत्तायां मध्यमः ।

१. 'कृतोद्ग', २ 'रुषा ।' ग घ. पाठः. ३. 'यद्धा नी', ४. 'मित्र' क. पाठः. ५. 'भा' क. घ पाठः.

अथ मन्दः —

द्वयोरेकत्र मानादौ तमन्यत्र करोति यः ॥ ११५ ॥
नैवापेक्षां न चोपेक्षां स स्नेहो मन्द उच्यते ।

यथा —

'मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥'

अत्र कुपितायामिरावत्यामुपेक्षापेक्षयोरभावस्य कथनेन राज्ञः स्नेहस्तद्विषयो मन्दः । आदिशब्दादतिपरिचयादयः । यथा —

'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥'

अत्र कस्याश्चित् स्वैरिण्या गृहिणीत्वपरिचयेन पतिदशां प्राप्तेऽपि जारे उपेक्षापेक्षयोरभावकथनाद् मन्दः स्नेहः ।

अथ रागः —

दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते ॥ ११६ ॥
येन स्नेहप्रकर्षेण स राग इति गीयते ।
कुसुम्भनीलीमाञ्जिष्ठरागभेदेन स त्रिधा ॥ ११७ ॥
कुसुम्भरागः स ज्ञेयो यश्चित्ते सज्जति क्षणात् ।
अतिप्रकाशमानोऽपि क्षणादेव विनश्यति ॥ ११८ ॥

---

१. 'स्य' च. पाठः.

यथा —

* 'बहुवल्लहस्स का होइ वल्लहा अहव पञ्च दिअहाइ ।
ता किं सत्थं मिग्गइ जस्सिं दिट्ठं अ बहु अ(?) ॥'

नीलीरागस्तु यः सक्तो नापैति न च दीप्यते ।

यथा—

'यदैव पूर्वं जनने शरीरं सा दक्षरोषात् सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥'

अत्र पशुपतिचित्तरागः सतीसङ्गमाभावनिश्चयेनापि नापैति, विषयाभावान्न प्रकाशते च ।

अचिरेणैव संसक्तश्चिरादपि न नश्यति ॥ ११९ ॥

अतीव शोभते योऽसौ माञ्जिष्ठो[1] राग उच्यते ।

यथा—

'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥'

अथानुरागः—

राग एव स्वसंवेद्यदशां[2] प्राप्याप्रकाशितः ॥ १२० ॥

यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ।

यथा ममैव —

'अश्रान्तकण्टकोद्गममनवरतस्वेदमविरतोत्कम्पम् ।
अनिशमुकुलितापाङ्गं मिथुनं कलयामि तदविनाभूतम् ॥'

---

१ 'मञ्जिष्ठारा', २. 'शामप्यप्र' च पाठः.

---

* बहुवल्लभस्य का भवति वल्लभाथवा पञ्च दिवसान् ।
तत् किं शास्त्रं मृग्यते यस्मिन् दृष्टं च बहु च ॥

अत्र पार्वतीपरमेश्वरयो रतिः शरीरैक्यनित्यसम्बन्धेन यावदाश्रयवृत्तिरनुभूतसर्वरागोपप्लवतया स्वसंवेद्यदशाप्रकाशितनित्यभोगरूपाश्रान्तरोमाञ्चादिभिरनुभावैर्व्यज्यते ।

अन्ये प्रीतिं रतेर्भेदमामनन्ति न तन्मतम् ॥ १२१ ॥
असम्प्रयोगविषया सेयं हर्षान्न भिद्यते ।

अथ हासः—

भाषणाकृतिवेषाणां क्रियायाश्च विकारतः ॥ १२२ ॥
लौल्यादेश्च परस्थानामेषामनुकृतेरपि ।
विकारश्चेतसो हासस्तत्र चेष्टाः समीरिताः ॥ १२३ ॥
दृष्टेर्विकासो नासोष्ठकपोलस्पन्दनादयः ।

भाषाविकारो भाषणासम्बन्धत्वादिः । आकृतिविकृतिरतिवामनत्वदन्तुरत्वादिः । वेषविकारो विरुद्धालङ्कारकल्पना । क्रियाविकारो विकटगतित्वादिः । एषामुदाहरणानि कैशिक्यां शुद्धहास्यजे नर्मणि निरूपितानि द्रष्टव्यानि ।

लौल्याद् यथा—

'बालेयतण्डुलविलोपकदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः ।
उत्रासहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥'

अत्र मृगाणां सन्त्रासनयष्टिसमाघ्राणनलौल्येन मुनीनां हासः । परानुकरणेन यथा—

'पि पि प्रिय! स स स्वयं मु मु मुखासवं देहि मे
त त त्यज द्रु द्रु द्रुतं भ भ भ भाजनं काञ्चनम् ।

---

१. 'शा' क. पाठः.

इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥'

अथोत्साहः—

शक्तिधैर्यसहायाद्यैः फलश्लाघ्येषु कर्मसु ॥ १२४ ॥

सत्वरा मानसी वृत्तिरुत्साहस्तत्र विक्रियाः[1] ।
कालाद्यवेक्षणं धैर्यं वागारम्भादयोऽपि च ॥ १२५ ॥

सहजाहार्यभेदेन स द्विधा परिभाष्यते ।

शक्त्या सहजोत्साहो यथा—

'अथो महेन्द्रं गिरिमारुरोह
वारांनिधिं लङ्घयितुं हनूमान् ।
वामेतराक्षिस्फुरणेन जानन्
करस्थितां राघवकार्यसिद्धिम् ॥'

अत्र हनूमतः स्वशक्तिजनितः समुद्रतरणोत्साहो महेन्द्रारोहेण व्यज्यते ।

स एव धैर्येण यथा—

'शक्त्या वक्षसि मग्नया सह मया मूढे प्लवङ्गाधिपे
निद्राणेषु च विद्रवत्सु कपिषु प्राप्तावकाशे द्विषि ।
मा भैष्टेति निरुन्धतः कपिभटानस्योर्जितभ्रूस्थितेः
सत्त्वच्छेदविसंस्थुलाक्षरजडा वाचस्त्वया न श्रुताः ॥'

अत्र रावणशक्तिप्रहारेण क्षीणशक्तेरपि लक्ष्मणस्य धैर्यजनितोत्साहः कपिभटाश्वासनादिभिर्व्यज्यते ।

सहायेन सहजोत्साहो यथा—

'स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।

१ 'या ।' क. ग. पाठः.

षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥'

शक्त्याहार्योत्साहो यथा—

'हस्तालम्बितमक्षसूत्रवलयं कर्णावतंसीकृतं
स्रस्तं भ्रूयुगमुन्नमय्य रचितं यज्ञोपवीतेन च ।
सन्नद्धा जघने च वल्कलपटी पाणिश्च धत्ते धनु-
र्दृष्टं भो जनकस्य योगिन इदं दान्तं विरक्तं मनः ॥'

धैर्यसहायाभ्यामाहार्यो यथा—

'तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥'

अत्र स्वभावशक्तिरहितस्य मन्मथस्येन्द्रप्रोत्साहनजनितेन धैर्येण वसन्तसहायेन चाहृतोत्साहो धैर्यच्युतिचिकीर्षाकथनादभिव्यज्यते ।

अथ विस्मयः—

लोकोत्तरपदार्थानां तत्पूर्वालोकनादिभिः ॥ १२६ ॥
विस्तारश्चेतसो यस्तु विस्मयः स निगद्यते ।
क्रियास्तत्राक्षिविस्तारसाधूक्तिपुलकादयः ॥ १२७ ॥

यथा—

'शिला कम्पं धत्ते शिव शिव वियुङ्क्ते कठिनता-
महो नारीच्छायामयति वनिताभूयमयते ।
वदत्येवं रामे विवलितमुखी वल्कलमुर-
स्स्थले कृत्वा बद्ध्वा कचभरमुदस्थाद् ऋषिवधूः ॥'

---

१. 'नु कष्ट' ग. घ पाठः

**अथ क्रोधः—**

वधावज्ञादिभिश्चित्तज्वलनं क्रोध ईरितः ।
एष त्रिधा भवेत् क्रोधकोपरोपप्रभेदतः ॥ १२८ ॥

वधच्छेदादिपर्यन्तः क्रोधः क्रूरजनाश्रयः ।
अभ्यर्थनावधिः प्रायः कोपो वीरजनाश्रयः ॥ १२९ ॥

शत्रुभृत्यसुहृत्पूज्याश्चत्वारो विषयास्तयोः ।
मुहुर्दष्टोष्ठता भुग्नभ्रूकुटी दन्तघट्टनम् ॥ १३० ॥
हस्तनिष्पीडनं गात्रकम्पः शस्त्रप्रतीक्षणम् ।
स्वभुजावेक्षण कण्ठगर्जाद्याः शात्रवक्रुधि ॥ १३१ ॥

**वधेन शत्रुविषयक्रोधो यथा—**

'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'

**अवज्ञया शत्रुविषयक्रोधो यथा—**

'श्रुतिशिखरनिषद्यावेद्यमानप्रभावं
पशुपतिमवमन्तुं चेष्टते यस्य बुद्धिः ।
प्रलयशमनदण्डोच्चण्डिमा तस्य सोऽहं
शिरसि चरणमेनं पातयामि त्रिवारम् ॥'

अत्र परशुरामेण[1]ेश्वरावज्ञया जनितो दधीचिक्रोधः

---

१. 'मं ईश्व' क. पाठ..

परुषवागारम्भेण व्यज्यते।

भृत्यक्रोधे तु चेष्टाः स्युस्तर्जनं मूर्धधूननम्[1] ।
निर्भर्त्सनं च बहुधा मुहुर्निर्वर्णनादयः ॥ १३२ ॥

यथा वीरानन्दे—

'आधूतमूर्धदशकं तरलाङ्गुलीकं
रूक्षेक्षणं परुषहुङ्कृतिगर्भकण्ठम् ।
पश्यन् निशाचरमुखानि ततोऽवतीर्णः
सौधात् प्लवङ्गपतिमुष्टिहतो दशास्यः ॥'

अत्र सुग्रीवसम्पाते पलायितेषु भृत्येषु रावणस्य क्रोधो मूर्धधूननादिभिरनुभावैर्व्यज्यते ।

मित्रक्रोधे विकाराः स्युर्नेत्रान्तस्खलदश्रुता ।
तूष्णींध्यानं च नैश्चेष्टयं श्वसितानि मुहुर्मुहुः ॥ १३३ ॥
मौनं विनम्रमुखता भुग्नदृष्टयादयोऽपि च ।

यथा ममैव —

'सुभद्रायाः श्रुत्वा तदनुमतिमत तेन हरणं
कृतं कौन्तेयेन क्षुभितमनसः स्तब्धवपुषः ।
नमद्वक्त्राः स्वान्ते किमपि विलिखन्तोऽतिकुटिलै-
रपश्यन्नुद्बाष्पैर्यदुपतिमपाङ्गैर्यदुभटाः ॥'

अत्र सुभद्राहरणानुमत्या जनितः कृष्णविषयो यदूनां क्रोधः कुटिलवीक्षणादिभिर्व्यज्यते ।

पूज्यक्रोधे तु चेष्टाः स्युः स्वनिन्दा नम्रवक्त्रता ॥ १३४ ॥
अनुत्तरप्रदानाङ्गस्वेदगद्गदिकादयः ।

---

१. 'र्ध्नि कम्पनम्' च. पाठ.,

यथा वीरानन्दे—

'रामप्रवासजननीं जननीं विलोक्य
रूक्षं विवक्षुरपि गद्गदिकां दधानः ।
नम्राननः कुटिलरज्यदपाङ्गदृष्टि-
र्जज्वाल चेतसि परं भरतो महात्मा ॥'

शत्रुक्रोधे तु चेष्टाः स्युर्भीत्रगर्भितभाषणम् ॥ १३५ ॥
भ्रूभेदनिटिलस्वेदकटाक्षारुणिमादयः ।

यथा—

'कोपेन प्रविधूतकुन्तलभरः सर्वाङ्गजो वेपथुः
किञ्चित्कोकनदच्छदेन सदृशे नेत्रे स्वयं रज्यतः ।
धत्ते कान्तिमिदं च वक्त्रमनयोर्भङ्गेन भीमभ्रुवो-
श्चन्द्रस्योद्भटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥'

अत्र लवस्य चन्द्रकेतोश्च परस्परविषयः कोपो भ्रूभेदादिभिर्व्यज्यते ।

भृत्यादिकोपत्रितये तत्तत्कोपो[1]चिताः क्रियाः ॥ १३६ ॥

अथ रोषः—

मिथः स्त्रीपुंसयोरेव रोषः स्त्रीगोचरः पुनः ॥
प्रत्ययावधिरत्र स्युर्विकाराः कुटिलेक्षणम् ॥ १३७ ॥
अधरस्फुरणापाङ्गरागनिःश्वसितादयः ।

यथा वीरानन्दे—

'भ्रूभङ्गभिन्नमुपरञ्जितलोचनान्त-
माकम्पिताधरमतिश्वसितानुबन्धम् ।

---

१. 'त्क्रोधोचि' च. पाठः.

पत्युर्मुखं क्षितिसुता परिलोकयन्ती
कारविमुक्तिरपि कष्टतरेति मेने ॥'

अत्र रावणकारागारनिवासशङ्कया जनितः सीताविषयो रामस्य रोषो भ्रूभङ्गादिभिरनुभावैर्व्यज्यते ।

प्रत्ययावधित्वं यथा—

'दिष्ट्या संश्रितविप्रलब्धवचनः क्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषार्धकथिते किञ्चिन्मया व्याहृतम्[1]।
मां प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता
मिथ्यादूषितयानया विरहितं दिष्ट्या न जातं जगत् ॥'

अत्र स्वप्नवृत्तान्तश्रवणभ्रान्तिजनितस्य भानुमतीविषयस्य सुयोधनस्य रोषस्य स्वप्नशेषश्रवणजनितप्रत्ययकृता शान्तिः दिष्ट्येत्यादिवागारम्भेण व्यज्यते ।

द्वेधा निगदितः स्त्रीणां रोषः पुरुषगोचरः ॥ १३८ ॥

सपत्नीहेतुराद्यः स्यादन्यः स्यादन्यहेतुकः ।
सपत्नीहेतुको रोषो विप्रलम्भे प्रपञ्च्यते ॥ १३९ ॥

अन्यहेतुकृते त्वत्र क्रियाः पुरुषरोषवत् ।

यथा—

'मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥'

---

१. 'कथितम' क. पाठः.

अत्र प्राक्तनवृत्तान्तापह्नवजनितो दुष्यन्तविषयः शाकुन्तलारोषो भ्रूभेदादिभिर्व्यज्यते ।

अथ शोकः—

बन्धुव्यापत्तिदौर्गत्यधननाशादिभिः कृतः ॥ १४० ॥
चित्तक्लेशभरः शोकस्तत्र चेष्टा विवर्णता ।
बाष्पोद्गमो मुखे शोषः स्तम्भनिःश्वसितादयः ॥ १४१ ॥
उत्तमानामयं प्रौढो विभावैरन्यसंश्रितैः ।
आत्मस्थैरधिरूढो[1]ऽपि प्रायः शौर्येण शाम्यति ॥ १४२ ॥
तत्र चेष्टा गुणाख्याने[2]निगूढरुदितादयः ।

परगतविभावैर्यथा—

'देवो रक्षतु वः किलाननपरिव्याकीर्णचूडाभरां
भर्तुर्भस्मनि पेतुषीं करतलव्यामृष्टपार्श्वक्षितिम् ।
हा प्राणेश्वर! हा स्मरेति रुदतीं बाष्पाकुलाक्षीं रतिं
दृष्ट्वा यस्य ललाटलोचनमपि व्यासाश्रु निर्वापितम् ॥'

अत्र रतिगतशोच्यदशाविलोकनेन देवस्य शोको बाष्पोद्गमेन व्यज्यते ।

आत्मगतैर्यथा—

'अयि कर्ण! कर्णसुभगां प्रयच्छ मे
गिरमुद्गमन्निव मयि स्थिरां मुदम् ।
अनुजैर्विमुक्तमकृताप्रियं प्रियं
वृषसेनवत्सल! विहाय यासि माम् ॥'

---

१. 'ति', २. 'नं' च. पाठः.

स्यादेष मृतिपर्यन्तः स्वपरस्थैस्तु मध्यमे ॥ १४३ ॥

अनतिव्यक्तरुदितप्रमुखास्तत्र विक्रियाः ।

स्वगतैर्मध्यमस्य यथा करुणाकन्दले—

'न्यायोपाधिरयं यदश्रुकणिकां मुञ्चन्ति बन्धुव्यये
रागोपाधिरयं त्यजन्ति विषयान् यज्ज्ञातयो दुस्त्यजान् ।
प्राणानां पुनरुत्क्रमः किमुपधिस्तत् केन विज्ञायते
देवं चानकदुन्दुभिं दशरथं चेक्ष्वाकुवंश्यं विना ॥'

अत्र वसुदेवस्य बन्धुविपत्तिजः शोकः प्राणोत्क्रमणेन व्यज्यते ।

परगतैर्यथा—

'निर्भिद्यन्त इवाङ्गकान्यसुहरैराक्रन्दसंस्तम्भनैः
कण्ठे गर्वनिरुद्धबाष्पविगमे वाचां गतिर्गद्गदा ।
धावत्यन्तरसंस्तु[2]तानपि जनान् कण्ठे ग्रहीतुं मनः
[3]काष्ठा तस्य ममेदृशी यदुकुले कुल्यः कथं जीवति ॥'

अत्र यदुकुलध्वंसनेन नारदस्य शोकः ।

हेतुभिः स्वगतैरेव प्रायः स्त्रीनीचयोरयम् ॥ १४४ ॥

मरणव्यवसायान्तस्तत्र भूपरिवेष्टनम् ।

उरस्ताडननिर्भेदपातोच्चैरोदनादयः ॥ १४५ ॥

तत्र नीचगतो यथा करुणाकन्दले—

'कचैरर्धच्छिन्नैः करनिहतिरक्तैः कुचतटै-
र्नखोत्कृत्तैर्गण्डैरुपलहतिशीर्णैश्च निटिलैः ।

---

१. 'ष' क. पाठः २. 'स्थि' ग. घ. पाठ. ३. 'कष्टा त' क. पाठ.

विदीर्णैराक्रन्दाद् विकलगदितैः कण्ठविवरै-
र्मनस्तक्ष्णोत्यन्तःपुरपरिजनानां स्थितिरियम् ॥'

स्त्रीगतो यथा—

'अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम्॥'

अथ जुगुप्सा—

अहृद्यानां पदार्थानां दर्शनश्रवणादिभिः।
सङ्कोचनं यन्मनसः सा जुगुप्सात्र विक्रिया ॥ १४६॥

नासापिधानं त्वरिता गतिरास्यविकूणनम्।
सर्वाङ्गधूननं कुत्सा मुहुर्निष्ठीवनादयः ॥ १४७॥

अहृद्यदर्शनाद् यथा—

'निष्टापस्विद्यदस्थ्नः क्वथनपरिणमन्मेदसः प्रेतकायान्
कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः।
उत्पक्वस्रंसि मांसप्रचयमुभयतः सन्धिनिर्मुक्तमारा-
देते निश्चूष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥'

अत्र जङ्घानिश्चूषणमज्जधारापानादिजनिता पिशाचविषया माधवस्य जुगुप्सारूपा गर्हा कुणपभुज इत्यनेन व्यज्यते।

श्रवणाद् यथा—

'मेदोमज्जाशोणितैः पिच्छिलेऽन्त-
स्त्वक्प्रच्छन्ने स्नायुबद्धास्थिसन्धौ।
साधुर्देहे कर्मचण्डालगेहे
बध्नात्युद्यत्पूतिगन्धे रतिं कः ॥'

अत्र कस्यचिद् वस्तुतत्त्वविचारागमश्रवणजनिता देहे जुगुप्सारूपा निन्दा व्यज्यते ।

घृणाशुद्धजुगुप्सान्या दशरूपे निरूपिता ।
सा हेयश्रवणोत्पन्नजुगुप्साया न भिद्यते ॥ १४८ ॥

अथ भयं —

भयं तु मन्तुना घोरदर्शनश्रवणादिभिः ।
चित्तस्यातीव चाञ्चल्यं तत् प्रायो नीचमध्ययोः ॥१४९॥
उत्तमस्य तु जायेत कारणैरतिलौकिकैः ।
भये तु शोभावैवर्ण्यं स्तब्धत्वं गात्रकम्पनम् ॥ १५० ॥
पलायनं परावृत्य वीक्षणं स्वाङ्गगोपनम् ।
आस्यशोषणमुत्क्रोशशरणान्वेषणादयः ॥ १५१ ॥

मन्तुरपराधः । तस्माद् यथा —

'विभूषणप्रत्युपहारहस्तं[2] विशांपतिस्तं प्रणतं निरीक्ष्य ।
सौपर्णमस्त्रं प्रतिसञ्जहार प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥'

घोरदर्शनाद् यथा —

'पराजितश्चोलभयेन पाण्ड्यः
पलायमानो दिशि दक्षिणस्याम् ।
समाकुलो वारिनिधिं विगाह्य
सेतुच्छिदं दाशरथिं निनिन्द ॥'

---

१. 'त्स' ग. घ. पाठः.  २. 'स्तमुपस्थित वीक्ष्य विशांपतिस्तम्' क. पाठः.

अत्र युद्धसंरम्भभीमस्य चोलस्य दर्शनात् पाण्ड्यस्य भयं पलायनादिभिर्व्यज्यते ।

घोरश्रवणाद् यथा—

'श्रुत्वा निस्साणराणं रणभुवि भवतो माधवक्ष्माधवेन्द्र !
प्राप्य प्रत्यर्थिवीराः कुलशिखरिगुहां गूढगाढान्धकाराम् ।
लीना लूनप्रतापा निजकटकमणिश्रेणिकान्तिप्रकर्ष-
स्रष्टारं नष्टधैर्याः कमलभुवमहो हन्त निन्दन्ति मन्दम् ॥'

अतिलौकिकात् कारणादुत्तमस्य यथा—

'अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद् दिवसानि कौशिकः ॥'

अत्र वर्णनीयतयोत्तमं रावणं प्रति देवेन्द्रस्य मध्यमत्वं न शङ्कनीयम् । यतः प्रकृतिरेव कारणं पुंसामुत्तमत्वे, न वर्णना । तथासति 'प्रियेण तस्यानपराधबाधिता' इत्यादिनौग्र्यादिभावकथनमुत्तमस्य रावणस्य नोचितं स्यात् । तस्मादुत्तमप्रकृतेरपि देवेन्द्रस्य लोकोत्तरवरप्रदानभीषणाद् रावणाद् भयमुत्पद्यते । अथोत्तमस्य हेतुजभयानङ्गीकारे—

'विद्राणे वित्तनाथे सवितरि तरले जातशङ्के शशाङ्के
वैकुण्ठे कुण्ठगर्वे द्रवति मघवति क्लान्तकान्तौ कृतान्ते ।
अब्रह्मण्यं ब्रुवाणे वियति शतधृतावुद्धृतैकाग्रहस्ते
पायाद् वः कालकूटं झटिति कबलयन् लीलया नीलकण्ठः ॥'

इत्यत्र विद्रावतारल्यादिभिरुद्घोषितस्य द्रव्यनाथसवित्रादिगतभयस्यापलापः कथमभिधेयः । तदपलापेऽपि कालकूटभक्षणस्य सुकरत्वात् तत्कार्यनिर्वहणे स्फीतस्य नीलकण्ठप्रभावोत्कर्षस्य कथं मस्तकोन्नमनं स्यात् ।

हेतुजादितरे प्रोक्ते[1] भये सोढ्ढलसूनुना ।
अकृत्रिमं[2] तूत्तमगं[3] गुर्वादीन् प्रत्यवास्तवम्[4] ॥ १५२ ॥
विभीषिकार्थं[5] बालादेर्वित्रासितकमित्युभे ।
तत्रा(द्य?न्त्य)मन्तर्भूतं स्याद् घोरश्रवणजे भये ॥१५३॥
भिक्षुभल्लूकचोरादिविद्युत्क्रव्यादकल्पितम् ।
आद्यं तु युक्तिकक्ष्यायां भयकक्ष्यां न गाहते ॥ १५४ ॥
गुर्वादिसन्निधौ यस्मान्नीचैः स्थित्यादिसूचितम् ।
भावो विनय एव स्यादथ[6] स्यान्नाटके यदि ॥ १५५ ॥
अवहित्थतया तस्य भयत्वं दूरतो गतम् ।
अतो हेतुजमेवैकं भयं स्यादिति निश्चयः ॥ १५६ ॥

तथाच भारतीये —

'यत् स्वाभावभयं स्यात् सत्त्वसमुत्थं तथैव कर्तव्यम् ।
पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैश्च भयम् ॥'

इति। ननु चात्र स्वभावजं कृतकं चेति द्विविधं भयं प्रतीयते । तस्मात् तद्विरोध इति चेद्, मैवम् । भरताद्यभिप्रायमजानता पेलवोक्तिमात्रतात्पर्येण न शङ्कितव्यम् ।

---

१. 'स्थ' क. पाठ.. २. 'कृत्रि', ३. 'गत गु' ग. घ. च. पाठ. ४. 'त' घ. पाठ . ५. 'कोत्थ बा', ६. 'द् भयत्वान्नाटयकोविदै ॥' च. पाठ.

तथाहि— यथा लोके मञ्जिष्ठादिद्रव्यं सहजो रक्तिमा गाढतरं व्याप्नोति, एवं मध्यनीचयोर्भयं स्वल्पकारणमात्रेऽपि सहजवद् दृश्यत इति सहजमित्युपचर्यते। यथा कृतको लाक्षारसः प्रयत्नसज्जितोऽपि काष्ठादिकमन्तर्न व्याप्नोति, एवमुत्तमगतं भयमिति अलौकिककारणप्रकर्षेणापि कृतकवदेव प्रतीयत इति कृतकमित्युपचर्यते। अन्यथा स्वाभाविकस्य भयस्य रम्यदर्शनेऽपि सम्प्रतिपत्तिप्रसङ्गात्। ननु यदि स्वाभाविकं भयं न विद्यते,

'द्वारे नियुक्तपुरुषानुमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन्।
तेजोभिरस्य विनिवारितदृष्टिपातै-
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि॥'

इत्यादिषु कथं भयोत्पत्तिरिति चेद्, उच्यते। भीषणास्त्रिविधाः आकृतिभीषणाः क्रियाभीषणा माहात्म्यभीषणाश्चेति। तत्राकृतिभीषणाः रक्षःपिशाचादयः। क्रियाभीषणाः वीरभद्रपरशुरामशार्दूलवृकादयः। माहात्म्यभीषणा देवनरदेवादयः। तदत्र माहात्म्यभीषणराजदर्शनाद् भयं नाट्याचार्यस्य जायते, न पुनः स्वभावात्। तदेतद् निस्संशयं कृतम् 'अहो दुरासदो राजमहिमे'ति पूर्ववाक्यं ग्रथ्नता तेनैव कालिदासेनेति सर्वं कल्याणम्।

भोजेनोक्ताः स्थायिनोऽन्ये गर्वः स्नेहो धृतिर्मतिः।

---

१. 'स्त्र' क. पाठः.

स्थास्नुरेवोद्धतप्रायः शान्तोदात्तरसेष्वपि ॥ १५७ ॥
तत्र स्नेहो रतेर्भेदः स्त्रीपुंसेच्छात्मकत्वतः ।

तथाहि—इदं खलु तेनैव प्रेयोरसवादिना महाराजेनोदाहृतं,

'यदेव रोचते मह्यं तदेव कुरुते प्रिया ।
इति वेद्मि न जानामि तत् प्रियं यत् करोति सा ॥'

तेनैव व्याकृतं च—अत्र वत्सलप्रकृतेर्धीरललितनायकस्य प्रियालम्बनभावादुत्पन्नः स्नेहः स्थायिभावो विषयसौन्दर्यादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानैर्मतिधृतिस्मृत्यादिभिर्व्यभिचारिभावैरनुभावैश्च प्रशंसादिभिः सृज्यमानो निष्पन्नः प्रेयोरस इति प्रतीयते । रतिप्रीत्योरयमेव मूलप्रकृतिरिष्यत इति । न तावदस्य स्नेहस्य रतिं प्रति मूलप्रकृतित्वं, रत्यङ्कुरदशायामस्यासंभवात् । संभोगेच्छामात्रं हि रतिः । सैव प्रेममानप्रणयाख्याभिस्तिसृभिः पूर्वदशाभिरुत्कटीभूता चतुर्थदशायां चित्तद्रवीभावलक्षणस्नेहरूपतामाप्नोति । तथाच भावप्रकाशिकायाम्—

'इयमङ्कुरिता प्रेम्णा मानात् पल्लविता भवेत् ।
सकोरका प्रणयतः स्नेहात् कुसुमिता भवेत् ॥'

इति । अतोऽस्मिन्नुदाहरणे स्नेहस्य रतिरूपेणैवास्वाद्यत्वं, न पृथक् स्थायित्वेन । एवञ्च स्नेहस्य रतिभेदत्वकथनात् प्रेयोरसस्यापि शृङ्गारात् पृथक्त्वमर्थसिद्धम् ।

१. 'द्विविधा चेच्छा च' पा०.

अन्ये पोषासहिष्णुत्वान्नैव स्थायिपदोचिताः ॥१५८॥

तथापि गर्वस्थायित्वमुदाहृतम्—

'अपकर्ताहमस्मीति मा ते मनसि भूद् भयम्।
विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति॥'

व्याकृतं च—अत्र मयापकारः कृत इति यत्ते चेतसि भयं, तन्मा भूत। मम खड्गः पराङ्मुखेषु न कदाचिदपि प्रहर्तुमुत्सहत इति सर्वदैव रूढोऽहङ्कारः प्रतीयते। सोऽयं गर्वप्रकृतिरुद्धतो नाम रसो निष्पद्यत इति। न तावदत्र गर्वः, किन्तु पूर्वमपकर्तारं पश्चाद् भीतं द्विषन्तमवलोक्य जातया समरविमुखं न हन्मि मा भैषीरिति वाक्सूचितया नीचे दयया कस्यचिद् वीरसार्वभौमस्य शोभनः पौरुषसात्त्विकभावः प्रतीयते। यदि वा, अभीतमपि शत्रुं भीतो यदि तर्हि पलायस्वेत्यधिक्षिपतीति गर्व इति चेद्, अस्तु वा गर्वः। तथापि असत्यभीतिकल्पनारूपचित्ताध्यवसायप्रकाशनद्वारेण शत्रुवधक्रोधमेव पुष्णाति। किञ्च विमुखाप्रहाररूपात्मसम्भावनारूपगर्वस्यासत्यभीतिकल्पनोपबृंहणादेष भावकानां वैरस्याय न केवलं, स्वादाभावाय चेति नास्मिन्नुदाहरणे गर्वस्य स्थायित्वमुपपद्यते। धृतेः स्थायित्वमपि तेनैवोदाहृतम्। तथाहि—

'सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम्।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः॥'

१. 'गतक्रो' ग घ पाठः

इति। व्याकृतं च—अत्र कस्यचिदुपशान्तप्रकृतेर्धीरशान्तनायकस्य अर्थोपगमनमनोऽनुकूलदारादिसम्पत्तेरालम्बनविभावरूपायाः समुत्पन्नो धृतिस्थायिभावो वस्तुतत्त्वालोचनादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानस्मृतिमत्यादिभिर्व्यभिचारिभावैर्वागारम्भादिभिश्चानुभावैरनुषज्यमानो निष्पन्नः शान्तो रस इति सङ्कीर्त्यते। अन्ये पुनरस्य शमं प्रकृतिमामनन्ति। स तु धृतेरेव विशेषो भविष्यतीति। अत्र तावदनुकूलदारसिद्धिजनिताया धृतेस्तु रतिपरतन्त्रत्वमाबालगोपालप्रसिद्धम्। ननु वस्तुतत्त्वालोचनादिभिरस्याः स्थायित्वं कल्प्यत इति चेद्, न। नैःस्पृह्यवासनावासिते भावकचित्ते विभावादिष्वपि नैःस्पृह्योन्मेषाद् धृतेर्मूलच्छेदप्रसङ्गात्। अर्थसम्पत्तिजनिता धृतिस्तु अगृध्नुलक्षणलोकोत्तरत्वप्रातिव्यवसायरूपमुत्साहमनुसरन्ती वीरोपकरणतामाप्नोतीति नात्र धृतेः स्थायित्वम्। धृतिस्थायित्वनिराकरणसंरम्भेणैव नष्टस्तद्विषयः शमस्थायी कुत्र वा लीनो न ज्ञायते। मतेः स्थायित्वं तेनैवोदाहृतम्। तथाहि—

'साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते।
किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः॥'

इति। व्याकृतं च—रामस्योदात्तप्रकृतेर्निसर्गत एव तत्त्वाभिनिवेशिनी मतिर्नान्यविषये प्रवर्तते, न च प्रवृत्तोपरमति। सा च सीतेयं मम स्वीकारयोग्येत्येवंरूपेण प्रवृत्ता रावणप्रार्थनालक्ष्मणप्रोत्साहनाभ्यामुद्दीप्यमाना समुपचीयमानचिन्तावितर्कव्रीडावहित्थस्मृत्यादिभिः कालोचितोत्तरानुमीयमानैर्विवेकचातुर्यधैर्यौदार्यादिभिः संसृज्यमानोदात्तरसत्वरूपेण निष्प-

घत इति । अत्र तावत् सीताविषया आत्मस्वीकारयोग्यत्वनिश्चयरूपा रामस्य मतिस्तु रतेरुत्पत्तिमात्रकारणमेव, तदनिश्चये रतेरनौचित्यात्। अत्र न्यायः। साधारण्यानिश्चयो मतिः। तस्याः स्थायित्वमिच्छाम इति चेद्, न। सा हि रावणविषयलक्ष्मणासूयादोषनिराकरणद्वारेण कार्यैकर(ण?णा)पराङ्मुखीभावलक्षणलोकोत्तरत्व (?) प्राप्तिव्यवसायरूपं रामोत्साहं भावकास्वादयोग्यतया प्रोत्साहयति।

तदष्टावेव विज्ञेयाः स्थायिनो मुनिसम्मताः।
स्थायिनोऽष्टौ त्रयस्त्रिंशत् सञ्चारिणोऽष्ट सात्त्विकाः॥
एवमेकोनपञ्चाशद् भावाः स्युर्मिलिता इमे।
एवं हि स्थायिनो भावान् शिङ्गभूपतिरभ्यधात्॥ १६० ॥
अथैषां रसरूपत्वमुच्यते शिङ्गभूभुजा।
विद्वन्मानसहंसेन रसभावविवेकिना॥ १६१ ॥
एते च स्थायिनः स्वैः स्वैर्विभावैर्व्यभिचारिभिः।
सात्त्विकैश्चानुभावैश्च नटाभिनययोगतः॥ १६२ ॥
साक्षात्कारमिवानीतैः प्रापिताः स्वादुरूपताम्।
सामाजिकानां मनसि प्रयान्ति रसरूपताम्॥ १६३॥
दध्यादिव्यञ्जनद्रव्यैश्चिञ्चादिभिरथौषधैः।
गुडादिमधुरद्रव्यैर्यथायोगं समन्वितैः॥ १६४ ॥
यद्वत् पाकविशेषेण षाडबाख्यो रसः परः।
निष्पद्यते विभावाद्यैः प्रयोगेण तथा रसः॥ १६५ ॥

१. 'ण्या' क पाठ.. २. 'कारणप', ३ 'धात्। सचारिणो विकल्पन्ते स्थायिनो यशसान्विताः। अ' ग घ, 'धात्।.....स्थायिना......अ' च. पाठ..

सोऽयमानन्दसम्भेदो भावकैरनुभूयते ।

ननु नायकनिष्ठस्य स्थायि[1]प्रकर्षलक्षणस्य रसस्य सामाजिकानुभवयोग्यता नोपपद्यते । अन्यभवस्य तस्यान्यानुभवायोगादिति चेत्, सत्यम् । को वा नायकगतं रसमाचष्टे । तथाहि—स च नायको दृष्टः श्रुतोऽनुकृतो वा रसस्याश्रयतामालम्बते । नाद्यः । साक्षाद्दृष्टनायकरत्यादेर्व्रीडाजुगुप्सादिप्रतीपफलत्वेन स्वादाभावात् । न द्वितीयतृतीयौ तयोरविद्यमानत्वात् । नह्यसत्याश्रये तदाश्रितस्यावस्थानमुपपद्यते । ननु भवतु नामैवम् । तथापि रसस्य नटगतत्वेन सामाजिकानुभवानुपपत्तिरिति चेद्, न । नटे रससम्भवः किमनुभावादिना भावनासम्भवेन वा । नाद्यः । अभ्यासपाटवादिनापि तत्सिद्धेः । किञ्च सामाजिकेषु यथोचितमनुभावसद्भावेऽपि त्वया तेषां रसाश्रयतानङ्गीकारात् । यदि विभावेन, तत्रापि किमनुकार्य[2]मालविकादिनानुकार्ये[3]ण स्वकान्तादिना वा । नाद्यः । अनौचित्यात् । नापि द्वितीयः । नष्टे साक्षाद्दृष्टनायकवदश्लीलप्रतीतेः । ननु मालविकादिविभावविशेषस्या[4]नौचित्याद् भावस्यासन्निहितत्वाच्च सामाजिकानामपि नटवदेवं रसाश्रयत्वं प्रसज्यत इति चेद्, अत्र केचन समादधते—विभावादिभावानामनपेक्षितबाह्यसत्त्वानां शब्दोपादानादेवासादितसद्भावानामानुकूल्यापेक्षया निस्साधारणानामपि काव्ये नाट्ये चाभिधापर्यायेण साधारणीकरणात्मना भावनाव्यापारेण स्वसम्बन्धितया विभावितानां साक्षाद्भावक-

---

१. 'यित्वप्र', २. 'रि' ग घ पाठः. ३. 'रिणा स्व' क. पाठ. ४ 'त्यात् सैव हि काव्ये' ग. घ. पाठ..

चेतसि विपरिवर्तमानानामालम्बनत्वाद्यविरोधादनौचित्यादिविप्लवरहितः स्थायी निर्भरानन्दविश्रान्तिस्वभावेन भोगेन भावकैर्भुज्यत इति।

अन्ये त्वन्यथा समाधानमाहुः—लोके प्रमदादिकारणादिभिः स्थाय्यनुमानेऽभ्यासपाटवात् सहृदयानां काव्ये नाट्ये च विभावादिपदव्यपदेश्यै[1]रस्वसम्बन्धित्वेन च साधार(णा?ण्या)त् प्रतीतैरभिव्यक्तीभूतो वासनात्मकतया स्थितः स्थायी रत्यादिः पानकरसन्यायेन चर्व्यमाणो लोकोत्तरचमत्कारकारिपरमानन्दमिव कन्दलयन् रसरूपतामाप्नोति। एवञ्च भुक्तिव्यक्तिपक्षयोरुभयोरपि सामाजिकानां रसाश्रयत्वोपपत्तेरन्यतरपक्षपरिग्रहाग्रहादुदास्महे। प्रायेण भारतीयमतानुसारिणां प्रक्रिया तु लोके कारणकार्यसहकारिरूपतामुपगतैः काव्ये नाट्ये वा रससूक्तिसुधामाधुरीधुरीणैर्यथो[2]क्ताभिनयसमेतैर्वा पदार्थत्वेन विभावानुभावसञ्चारिव्यपदेशं च प्रापितैर्नायिकानायकचन्द्रचन्द्रिकामलयानिलादिभ्रूविक्षेपकटाक्षपातस्वेदरोमाञ्चादिनिर्वेदविषादादिरूपैर्वासनात्मकैरात्मसम्बन्धित्वेनाभिमतैर्भावैर्धर्मकीर्त्तिरतानां षडङ्गनाट्यसमयज्ञानां नानादेशवेषभाषाविचक्षणानां निखिलकलाकलापकोविदानां सन्त्यक्तमत्सराणां सकलसिद्धान्तवेदिनां रसभावाववेचकानां काव्यार्थनिहितचेतसां सामाजिकानां मनसि मुद्रामुद्रितन्यायेन विपरिवर्तिता वासिताश्चाभिवर्धिताः स्थायिनो भावाः काव्यार्थत्वेनाभिमताः बाह्यार्थावलम्बना-

---

१. 'श्यैः स्वसम्बन्धित्वेनान्यस' ग. घ. पाठः. २. 'थास्वमभि' क. पाठः.

त्मकाः सन्तो विकासविस्तारक्षोभविक्षेपात्मकतया विभिन्नाः स्वरूपेणास्वाद्यमानाः परमानन्दरूपतामाप्नुवन्तीति सकलसहृदयहृदयसंवेदनसिद्धस्य रसस्य प्रमाणान्तरेण संसाधनपरिश्रमः श्रोतृजनचित्तक्षोभाय (न ?) केवलं. नोपयोगायेति प्रकृतमनुसरामः।

अष्टधा स च शृङ्गारहास्यवीराद्भुता अपि ॥ १६६ ॥
रौद्रः करुणबीभत्सौ भयानक इतीरितः।
एषूत्तरस्तु पूर्वस्मात् सम्भूतो विषमात् समः ॥ १६७॥
बहुवक्तव्यताहेतोः सकलाह्लादनादपि।
रसेषु तत्र शृङ्गारः प्रथमं लक्ष्यते स्फुटम् ॥ १६८ ॥
विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः[1]।
नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते॥ १६९ ॥
स विप्रलम्भः सम्भोग इति द्वेधा निगद्यते।
अयुक्तयोस्तरुणयोर्यो[2]ऽनुरागः परस्परम्॥ १७०॥
अभीष्टालिङ्गनादीनामनवाप्तौ प्रकृष्यते।
स विप्रलम्भो विज्ञेयः स चतुर्धा निगद्यते ॥ १७१ ॥
पूर्वानुरागमानौ च प्रवासकरुणाविति।

अत्रायमर्थः—नायिकानायकयोः प्रागसङ्गतयोः सङ्गतवियुक्तयोर्वा स्वोचितविभावैरनुभावैश्चोपजायमानः परस्परानुरागोऽन्यतरानुरागो वा स्वाभिलषितालिङ्गनादीनामनवाप्तौ सत्यामुत्पद्यमानैर्व्यभिचारिभिरनुभावैश्च प्रकृष्यमाणो विप्रल-

१. 'स्वोचितैर्व्य' च पाठ. २ 'र' ग घ पाठः.

म्भशृङ्गार इत्याख्यायते । स च पूर्वानुरागादिभेदेन चातुर्विध्यमापद्यते । तत्र पूर्वानुरागः —

यत् प्रेम सङ्गमात् पूर्वं दर्शनश्रवणोद्भवम् ॥ १७२ ॥
पूर्वानुरागः स ज्ञेयः श्रवणं तद्गुणश्रुतिः ।

श्रवणेन पूर्वानुरागो यथा —

'साधु त्वया तर्कितमेतदेव
स्वेनानलं यत् किल संश्रयिष्ये ।
विनामुना स्वात्मनि तु प्रहर्तुं
मृषागिरं त्वां नृपतौ न कर्तुम् ॥'

अत्र हंसमुखान्नलगुणश्रवणेन दमयन्त्याः पूर्वानुरागः ।

प्रत्यक्षचित्रस्वप्नादौ दर्शनं दर्शनं मतम् ॥ १७३ ॥

प्रत्यक्षदर्शनेन यथा —

'तं वीक्ष्य सर्वावयवानवद्यं न्यवर्ततान्योपगमात् कुमारी ।
नहि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ॥'

चित्रदर्शनेन यथा —

'लीलावधूतकमला कलयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥'

अत्र चित्रगतरत्नावलीदर्शनाद् वत्सराजस्य पूर्वानुरागः ।

स्वप्नदर्शनेन यथा —

'स्वप्ने दृष्टाकारा तमपि समादाय गतवती भवती ।
अन्यमुपायं न लभे प्रसीद रम्भोरु ! दासाय ॥'

अत्र कामपि स्वप्ने दृष्टवतः कस्यचिन्नायकस्य पूर्वानुरागः ।

यतः पूर्वानुरागोऽयं सङ्कल्पात्मा प्रवर्तते ।
सोऽयं पूर्वानुरागाख्यो विप्रलम्भ इतीरितः ॥ १७४ ॥

पारतन्त्र्यादयं द्वेधा दैवमानुषकल्पनात् ।
तत्र सञ्चारिणो ग्लानिः शङ्कासूये श्रमो भयम् ॥ १७५ ॥

निर्वेदौत्सुक्यदैन्यानि चिन्तानिद्रे प्रबोधता ।
विषादो जडतोन्मादो मोहो मरणमेव च ॥ १७६ ॥

तत्र दैवपारतन्त्र्येण यथा—

'शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समीक्ष्य ललितं वपुरात्मनश्च ।
सख्याः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥'

अत्र जनकाद्यानुकूल्येऽपि दैवपारतन्त्र्येण पार्वत्याः पूर्वानुरागः ।

मानुषपारतन्त्र्येण यथा—

'*दुल्लहो पिओ तस्सिं भव हिअअ! णिरासं
अम्मो[1] अपङ्गो मे फुरइ[2] किं वि वामो ।
एसो सो चिरदिट्ठो कहं उण[3] दक्खिदव्वो
अहं[4] पराहीणा तुमं पुण सतिह्णं[5] ॥'

१ 'ह्माणमपङ्गदेसो फु', २. 'इ वा' क पाठ ३. 'वणदव्वो', ४. 'णाह ! प', ५. 'ण तुइ गणअ स' ग. घ. पाठ

* दुर्लभः प्रियस्तस्मिन् भव हृदय ! निराशम्
अम्मो अपाङ्गो मे स्फुरति किमपि वाम ।
एप स चिरदृष्ट कथ पुनर्द्रष्टव्य
अह पराधीना त्व पुन. सतृष्णम् ॥

अत्र देवयानीपारतन्त्र्येण शर्मिष्ठाया ययातिविषयः पूर्वानुरागः ।

एतस्मिन्नभिलाषादि मरणान्तमनेकधा ।
तत्तत्सञ्चारिभावानामुत्कटत्वाद् दशा भवेत् ॥ १७७ ॥

तथापि प्राक्तनैरस्या दशावस्थाः समासतः ।
प्रोक्तास्तदनुरोधेन तासां लक्षणमुच्यते ॥ १७८ ॥

अभिलाषश्चिन्तानुस्मृतिगुणसङ्कीर्तनोद्वेगाः ।
सविलापा उन्मादव्याधी जडता मृतिश्च ताः क्रमशः ॥

अत्राभिलाषः—

सङ्गमोपायरचितप्रारब्धव्यवसायतः ।
सङ्कल्पेच्छासमुद्भूतिरभिलाषोऽत्र विक्रियाः ॥ १८० ॥

प्रवेशनिर्गमौ तूष्णीं तद्दृष्टिपथगामिनौ ।
रागप्रकाशनपराश्चेष्टाः स्वात्मप्रसाधनम् ॥ १८१ ॥

व्याजोक्तयश्च विजने स्थितिरित्यादयो मताः ।

अथ चिन्ता—

केनोपायेन संसिद्धिः कदा तस्य समागमः ॥ १८२ ॥

दूतीमुखेन किं वाच्यमित्याद्यूहस्तु चिन्तनम् ।
अत्र नीव्यादिसंस्पर्शः शय्यायां परिवर्तनम् ॥ १८३ ॥

सबाष्पकेकरा दृष्टिर्मुद्रिकादिविवर्तनम् ।
निर्लक्ष्यवीक्षणं चैवमाद्या विकृतयो मताः ॥ १८४ ॥

अथानुस्मृतिः—

अर्थानामनुभूतानां देशकालानुवर्तिनाम् ।

---

१. 'न्तनानु', २ 'द्रि' च. पाठः.

सान्तत्येन परामर्शो[1] मनसः स्यादनुस्मृतिः ॥ १८५ ॥

तत्रानुभावा निःश्वासो ध्यानं कृत्यविहस्तता ।

शय्यासनादिविद्वेष इत्याद्याः स्मरकल्पिताः ॥ १८६ ॥

अथ गुणकीर्तनं —

सौन्दर्यादिगुणश्लाघा गुणकीर्तनमत्र तु ।

रोमाञ्चो गद्गदा वाणी भावमन्थरवीक्षणम्[3] ॥ १८७ ॥

तत्सङ्गचिन्तनं सख्या गण्डस्वेदादयोऽपि च ।

अथोद्वेगः—

मनसः कम्प[4] उद्वेगः कथितस्तत्र विक्रियाः ॥ १८८ ॥

चिन्ता सन्तापनिःश्वासौ द्वेषः शय्यासनादिषु ।

स्तम्भचिन्ताश्रुवैवर्ण्यदीनत्वादय ईरिताः ॥ १८९ ॥

अथ विलापः—

इह मे दृक्पथं प्रापदिहातिष्ठदिहास्त च ।

इहालपदिहावात्सीदिहैव न्यवृतत् तदा[6] ॥ १९० ॥

इत्यादिवाक्यविन्यासो विलाप इति कीर्तितः ।

तत्र चेष्टास्तु कुत्रापि गमनं क्वचिदीक्षणम् ॥ १९१ ॥

क्वचित् क्वचिदवस्थानं क्वचिच्च भ्रमणादयः ।

अथोन्मादः—

सर्वावस्थासु सर्वत्र तन्मनस्कतया सदा ॥ १९२ ॥

अतस्मिंस्तदिति भ्रान्तिरुन्मादो विरहोद्भवः ।

१. 'मा' च. पाठः. २. 'भयम' क पाठ ३. 'थितम्', ४ 'स्तम्भ उ', ५. 'ता', ६. 'था' च पाठः.

तत्र चेष्टास्तु विज्ञेया द्वेषः स्वेष्टेऽपि वस्तुनि ॥ १९३ ॥

दीर्घं मुहुश्च निःश्वासो निर्निमेषतया स्थितिः ।
निर्निमित्तस्मितध्यानगानमौनादयोऽपि च ॥ १९४ ॥

अथ व्याधिः—

अभीष्टसङ्गमाभावाद् व्याधिः सन्तापलक्षणः ।
अत्र सन्तापनिःश्वासौ शीतवस्तुनिषेवणम् ॥ १९५ ॥

जीवितोपेक्षणं मोहो मुमूर्षा धृतिवर्जनम् ।
यत्र क्वचिच्च पतनं स्रस्ताक्षत्वादयोऽपि च ॥ १९६ ॥

अथ जडता—

इदमिष्टमनिष्टं तदिति वेत्ति न किञ्चन ।
नोत्तरं भाषते प्रश्ने नेक्षते न शृणोति च ॥ १९७ ॥

यत्र ध्यायति निस्संज्ञं जडता सा प्रकीर्तिता ।
अत्र स्पर्शानभिज्ञत्वं वैवर्ण्यं शिथिलाङ्गता ॥ १९८ ॥

अकाण्डहुङ्कृतिः स्तम्भो निःश्वासकृशतादयः ।

अथ मरणं—

तैस्तैः कृतैः प्रतीकारैर्यदि न स्यात् समागमः ॥ १९९ ॥

ततः स्यान्मरणोद्योगः कामाग्नेस्तत्र विक्रियाः ।
लीलाशुकचकोरादिन्यासः स्निग्धसखीकरे ॥ २०० ॥

कलकण्ठकलालाप[2]श्रुतिर्मन्दानिलादरः ।
ज्योत्स्नाप्रवेशमाकन्दमञ्जरीवीक्षणादयः ॥ २०१ ॥

अत्र केचिदभिलाषात् पूर्वतनमिच्छोत्कण्ठालक्षणमवस्थाद्वयमङ्गीकृत्य द्वादशावस्था इति वर्णयन्ति । तत्रेच्छा

१. 'त' च. पाठः. २. 'रावश्रु' ग. घ. पाठ.

पुनरभिलाषान्न भिद्यते, तत्प्राप्तित्वरालक्षणोत्कण्ठा तु चिन्तनान्नातिरिच्यत इत्युदासितम् ।

अथ मानविप्रलम्भः—

मुहुः[1] कृतो मेति मेति प्रतिषेधार्थवीप्सया ।
ईप्सिता[2]लिङ्गनादीनां निरोधो मान उच्यते ॥ २०२ ॥

सोऽयं सहेतुर्निर्हेतुभेदाद् द्वेधात्र हेतुजः ।
ईर्ष्यया सम्भवेदीर्ष्या त्वन्यासङ्गिनि वल्लभे ॥ २०३ ॥

असहिष्णुत्वमेवं[3] स्याद् दृष्टेरनुमितेः श्रुतेः ।
ईर्ष्यामाने तु निर्वेदा[4]वहित्थाग्लानिदीनताः ॥ २०४ ॥

चिन्ताचापल्यजडतामौना[5]द्या व्यभिचारिणः ।

तत्र दर्शनेर्ष्यामानो यथा—

‡'पच्चक्खमन्तुकारअ ! जइ चुम्बसि मह इमे हदकवोळे ।
ता मज्झ पिअसहीए विसेसओ कीस तं[6]ण्णाओ ॥'

अत्र नायिकाकपोलचुम्बनव्याजेन तत्प्रतिबिम्बितां सखीं चुम्बति नायके तदीर्ष्यया जनितो नायिकामानः प्रत्यक्षमन्तुकारकेत्यनया सम्बुद्ध्या व्यज्यते ।

भोगाङ्कगोत्रस्खलनोत्स्वप्नैरनुमितिस्त्रिधा ॥ २०५ ॥

भोगाङ्कानुमितिजनितेर्ष्यामानो यथा ममैव—

१. 'हुमुहुर्मेति', २ 'अभीष्टालि', ३ 'पा', ४ 'दो', ५ 'मोहाद्या' च. पाठः. ६. 'वि' ग. घ पाठ

‡ प्रत्यक्षमन्तुकारक ! यदि चुम्बसि ममेमौ हतकपोलौ ।
ततो मम प्रियसख्या विशेषकः कस्मादार्द्रः ॥

'को दोषो मणिमालिका यदि भवेत् कण्ठे न किं शङ्करो
धत्ते भूषणमर्धचन्द्रममलं चन्द्रे न किं कालिमा।
तत् साध्वेव कृतं कृतं भणितिभिर्नैवापराद्धं त्वया
भाग्यं द्रष्टुमनीशयैव भवतः कान्तापराद्धं मया॥'

अत्र मणिमालिकादिलक्षणमदनमुद्रानुमितप्रियापराधजनितेर्ष्यासम्भूतो मानः तत् साध्वेव कृतमित्यादिभिर्विपरीतलक्षणोक्तिभिर्व्यज्यते।

गोत्रस्खलनेन यथा ममैव —

'नामव्यतिक्रमनिमित्तरुषारुणेन
नेत्राञ्चलेन मयि ताडनमाचरन्त्याः।
मा मा स्पृशेति परुषाक्षरवादरम्यं
मन्ये तदेव मुखपङ्कजमायताक्ष्याः॥'

उत्स्वप्नेर्ष्यया यथा —

'स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम्।
प्रच्छदान्तगलिताश्रुबिन्दुभिः क्रोधभिन्नवलयैर्विवर्तनैः॥'

श्रुतिः प्रियापराधस्य श्रुतिराप्तसखीमुखात्।

श्रुतिजनितेर्ष्यया मानो यथा —

'अङ्गुल्यग्रनखेन बाष्पसलिलं विक्षिप्य विक्षिप्य किं
तूष्णीं रोदिषि कोपने! बहुतरं फूत्कृत्य रोदिष्यसि।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति॥'

अत्र पिशुनसखीजनोपदेशजनितो मानो बाष्पादिभिर्व्यज्यते ।

कारणाभावसम्भूतो निर्हेतुः स्याद् द्वयोरपि ॥ २०६ ॥
अवहित्थादयस्तत्र विज्ञेया व्यभिचारिणः ।

तत्र पुरुषस्य यथा—

'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने! मानमधुना ॥'

यथा वा—

*'अळिअपसुत्तनिमीळिअक्ख! देहि सुहअ! मज्झ ओआसं ।
गण्डपरिचुम्बणपुळइअङ्ग! ण पुणो चिराइस्सं ॥'

अत्रालीकस्वापाक्षिनिमीलनादिसूचितपुरुषमानकारणस्य प्रसाधनगृहव्यापारनिमित्तविलम्बनस्याभासत्वम् ।

स्त्रिया यथा—

'मुञ्च कोपमनिमित्तकोपने! सन्ध्यया प्रणमितोऽस्मि नान्यथा ।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥'

अत्र पार्वतीमानकारणस्य परमेश्वरकृतसन्ध्याप्रणामस्याभासत्वम् ।

ननु 'अळिअपसुत्ते'त्यत्र गण्डपरिचुम्बनस्य निषेधो नास्ति । 'मुञ्च कोपे'त्यत्र च निषेधो न श्रूयते । कथमस्य निर्हेतुकस्य मानत्वमिति चेत् । पूर्वस्मिन्नुदाहरणे नेति नेति वाचिकनिषेधस्योपलक्षणत्वादप्रतिक्रियया चुम्बनानङ्गीकारल-

---

*अलीकप्रसुप्तनिमीलिताक्ष! देहि सुभग! ममावकाशम् ।
गण्डपरिचुम्बनपुलकिताङ्ग! न पुनश्चिरयिष्यामि ॥

क्षणो निषेधो विद्यत एव। अपरत्र पुनरनुत्तरदानादिनानङ्गी-कारलक्षणो निषेधो वक्तव्य एव। ननु निर्हेतुकस्य मानस्य भावकौटिल्यरूपमानस्य च को भेद इति चेद्, उच्यते। निर्हेतुकमाने तु कोपव्याजेन चुम्बनादिविलम्बनात् प्रेमपरी-क्षणं फलं, भावकौटिल्यमाने तु चुम्बनाद्यविलम्बः फलमिति स्पष्ट एव तयोर्भेदः।

निर्हेतुकः स्वयं शाम्येत् स्वयंग्राहस्मितादिभिः ॥२०६॥

यथा—

'इदं किमार्येण कृतं ममाङ्गे
मुग्धे! किमेतद् रचितं त्वयेति।
तयोः क्रियान्तेष्वनुभोगचिह्नैः
स्मितोत्तरोऽभूत् कुहनाविरोधः॥'

अत्र लक्ष्मीनारायणयोरन्योन्यमानस्य परस्परकृतभो-गचिह्नलक्षणकारणाभासजनितस्य स्मितोत्तरतया स्वयं शा-न्तिरवगम्यते।

हेतुजस्तु शमं याति यथायोग्यं प्रकल्पितैः।
साम्ना भेदेन दानेन नत्युपेक्षारसान्तरैः॥ २०८॥

तत्र प्रियोक्तिकथनं यत्तु तत् साम गीयते।

तेन यथा ममैव—

'अनन्यसाधारण एष दासः
किमन्यया चेतसि शङ्कयेति।
प्रिये वदत्यादृतया कयाचि-
न्नाज्ञायि मानोऽपि सखीजनोऽपि॥'

१. 'रुत्तरादा' क पाठः. २. 'तत्प्रियो' च. पाठ. ३ 'था' क. पाठ'.

अत्र प्रियसामोक्तिजनिता कस्याश्चिन्मानशान्तिः सखीजनमानाद्यज्ञानसूचितैरालिङ्गनादिभिर्व्यज्यते

सख्यादिभिरुपालम्भप्रयोगो भेद उच्यते ॥ २०९ ॥

यथा—

'विहायैतन्मानव्यसनमनयोस्तन्वि! कुचयो-
र्विधेयस्ते प्रेयान् यदि वयमनुल्लङ्घ्यवचसः ।
सखीभ्यः स्निग्धाभ्यो गिरमिति निशम्यैणनयना
निवापाम्भो दत्ते नयनसलिलैर्मानसुहृदे ॥'

व्याजेन भूषणादीनां प्रदानं दानमुच्यते ।

यथा—

'मुहुरुपहसितामिवालिनादै-
र्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धूर्त! तस्याः
शठ! कलिरेव महांस्त्वयाद्य दत्तः ॥'

नतिः पादप्रणामः स्यात्

तया यथा—

'पिशुनवचनरोषात् किञ्चिदाकुञ्चितभ्रूः
प्रणमति निजनाथे पादपर्यन्तपीठम् ।
युवतिरलमपाङ्गस्यन्दिनो बाष्पबिन्दू-
ननयत कुचयुग्मे निर्गुणां हारवल्लीम् ॥'

१. 'धाम्नि त' क. पाठः.

तूष्णींस्थितिरुपेक्षणम् ॥ २१० ॥

यथा—

*'चरणोआसणिसण्णस्स तस्स ह्मरिमो अणाळवन्तस्स ।
पाअङ्गुट्ठावेट्ठिअकेसदिढाअड्ढणसुहोळ्ळं ॥'

अत्र शय्यायां चरणावकाशस्थितिमौनादिभिरुपेक्षा । तया जनिता मानस्य शान्तिश्चरणाङ्गुष्ठावेष्टितकेशदृढाकर्षणेन व्यज्यते ।

आकस्मिकरसादीनां[1] कल्पना स्याद् रसान्तरम् ।
याद्दच्छिकं बुद्धिपूर्वमिति द्वेधा निगद्यते ॥ २११ ॥
अनुकूलेन दैवेन कृतं याद्दच्छिकं भवेत् ।

तेन मानशान्तिर्यथा —

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥'

अत्र मानप्रणोदनघनगर्जितसन्त्रासस्य प्रियप्रयत्नैर्विना दैववशेन सम्भूतत्वाद् याद्दच्छिकत्वम् ।

प्रत्युत्पन्नधियां पुंसां कल्पितं बुद्धिपूर्वकम् ॥ २१२ ॥

यथा —

'लीलातामरसाहतोऽन्यवनितानिश्शङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाथ सा नतिमृते तेनानिशं चुम्बिता ॥'

---

१. 'भयादी' ङ पाठः.

---

* चरणावकाशनिषण्णस्य तस्य स्मरामोऽनालपतः ।
पादाङ्गुष्ठावेष्टितकेशदृढाकर्षणसुखार्द्राम् ॥

अत्र मानापनोदनस्य प्रियत्रासस्य नेत्रव्यावृत्तिनटनलक्षणया नायकस्य प्रत्युत्पन्नमत्या कल्पितत्वाद् बुद्धिपूर्वकत्वम् ।

**अथ प्रवासः—**

पूर्वसङ्गतयोर्यूनोर्भवेद् देशान्तरादिभिः ।
चरणव्यवधानं यत् स प्रवास इतीरितः ॥ २१३ ॥
तज्जन्यो विप्रलम्भोऽपि प्रवासत्वेन सम्मतः ।
हर्षगर्वमदव्रीडा वर्जयित्वा समीरिताः ॥ २१४ ॥
शृङ्गारयोग्याः सर्वेऽपि प्रवासे व्यभिचारिणः ।
कार्यतः सम्भ्रमाच्छापात् तत् त्रिधा तत्र कार्यजः ॥
बुद्धिपूर्वतया यूनोः सन्निधानव्यपेक्षया ।
वृत्तो वर्तिष्यमाणश्च वर्तमान इति त्रिधा ॥ २१६ ॥

धर्मार्थसङ्ग्रहो बुद्धिपूर्वो व्यापारः कार्यम् । तेन वृत्तो यथा—

'क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान् मन्दारशून्यानलकांश्चकार ॥'

अत्र पुरन्दरस्य पूर्वं शचीमामन्त्र्य पश्चादध्वरप्रदेशगमनेन तयोः सन्निधानव्यपेक्षया विप्रलम्भस्य भूतपूर्वत्वम् ।

वर्तिष्यमाणो यथा—

'भवतु विदितं व्यर्थालापैरलं प्रिय! गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथारूढं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले का नः पीडा गते हतजीविते ॥'

वर्तमानो यथा —

'यामीति प्रियपृष्टायाः प्रियायाः कण्ठलग्नयोः ।
वचोजीवितयोरासीत् पुरो निस्सरणे रणः ॥'

अथ सम्भ्रमात् —

आवेगः सम्भ्रमः सोऽपि नैको दिव्यादिभेदतः ।

दिव्यो यथा —

'तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥'

अत्र विप्रलम्भस्य कारणान्तरनिरासेन कोऽयं विधिरिति विधेः कारणत्वाभिप्रायेण दिव्यसम्भ्रमजनितत्वं प्रतीयते ।

अथ शापः —

शापो वैरूप्यताद्रूप्यप्रवृत्तेर्द्विविधो भवेत् ॥ २१७ ॥
प्रवासः शापवैरूप्यादहल्यागौतमादिषु

ताद्रूप्येण यथा —

'कश्चित् कान्ताविरहगुरुणा स्वाधिकारात् प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येन भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥'

अथ करुणः—

द्वयोरेकस्य मरणे पुनरुज्जीवनावधौ ॥ २१८ ॥
विरहः करुणोऽन्यस्य सङ्गमाशानिवर्तनः ।
करुणभ्रमकारित्वात् सोऽयं करुण उच्यते ॥ २१९ ॥
सञ्चारिणोऽनुभावाश्च करुणे विप्रवासवत् ।

यथा—

'अथ मदनवधूरुपप्लवान्तं व्यसनकृशा प्रतिपालयांबभूव ।
शशिन इव दिवातनस्य रेखा किरणपरिक्षयधूसरा प्रदोषम् ॥'

अत्राकाशसरस्वतीप्रत्ययेन रतेर्विप्रलम्भः कृशत्वाद्यनुमितैर्ग्लान्यादिभिर्व्यभिचारिभिर्भावैः प्रोषितसमयपरिपालनादिभिरनुभावैर्व्यज्यते । अत्र केचिदाहुः— करुणो नाम विप्रलम्भशृङ्गारो नास्ति । उभयालम्बनस्य तस्यैकत्रैवासम्भवात् । यत्र त्वेकस्यापाये सति तदितरगताः प्रलापादयो भवन्ति, स शोकान्न भिद्यत इति । तदयुक्तम् । यत्र पुनरनुज्जीवनेन सम्भोगाभावः, तत्र सत्यं शोक एव । यत्र सोऽस्ति, तत्र विप्रलम्भ एव । अन्यथा सम्भोगशिरस्केऽन्यतरापायलक्षणे वैरूप्यशापप्रवासेऽपि शोकरूपत्वापत्तेः । नन्वेवं प्रवासकरुणयोः को भेद इति चेद्, उच्यते । शरीरेण देशान्तरगमने प्रवासः, प्राणैर्देशान्तरगमने करुण इति । अत्र केचिद् अयोगशब्दस्य पूर्वानुरागवाचकत्वं विप्रयोगशब्दस्य मानादिवाचकत्वं चाभिप्रेत्यायोगो विप्रयोगश्चेति सम्भोगादन्यस्य शृङ्गारस्य विभागमाहुः । विप्रलम्भ[1]पदस्य प्रयोगे च कारणं ब्रु-

[1] 'म्भस्यायोगस्य का' ग घ. पाठ..

वते—कृत्वा सङ्केतमप्राप्तौ तद्व्यतिक्रमेणापि कान्तानुसरणेनच विप्रलम्भशब्दस्य प्रयोगः, वञ्चनत्वात्। तत्सामान्याभिधायित्वे तु विप्रलम्भशब्दस्योपचरितत्वापत्तेरिति। तदयुक्तम्। चतुर्विधेऽपि विप्रलम्भे वञ्चनरूपस्यार्थस्य मुख्यत एव सिद्धेः।
तथाच श्रीभोजः—

'विप्रलम्भस्य यदि वा वञ्चनामात्रवादिन।
विना समासैश्चतुराश्चतुरोऽर्थान् प्रयुञ्जते॥
पूर्वानुरागो विविधो वञ्चनव्रीलितादिभिः।
माने विरुद्धं तत् प्राहुः पुनरीर्ष्यायितादिभिः॥
व्याविद्धं दीर्घकालत्वात् प्रवासे तत् प्रतीयते।
विनिषिद्धं तु करुणे करुणत्वेन गीयते॥'

अथ सम्भोगः—

स्पर्शनालिङ्गनादीनामानुकूल्यान्निषेवणम्॥ २२०॥
घटते यत्र यूनो[1]र्यत् स सम्भोगश्चतुर्विधः।

अत्रायमर्थः—प्रागसङ्गतयोः सङ्गतवियुक्तयोर्वा नायिकानायकयोः परस्परसमागमे प्रागुत्पन्ना तदानीन्तना वा रतिः प्रेप्सितालिङ्गनादीनां प्राप्तौ सत्यामुपजायमानैर्हर्षादिभिः संसृज्यमाना चन्द्रोदयादिभिरुद्दीपिता स्मितादिभिर्व्यज्यमाना प्राप्तप्रकर्षा सम्भोगश्शृङ्गार इत्याख्यायते। स च वक्ष्यमाणक्रमेण चतुर्विधः।

संक्षिप्तः संकीर्णः सम्पन्नत[2]रः समृद्धिमानिति ते॥ २२१॥
पूर्वानुरागमानप्रवासकरुणानुसम्भवाः क्रमतः।

---

१. 'नोः स सम्भोगोऽस्य च' क. पाठ. २. 'रत. स' ख. पाठ.

तत्र संक्षिप्तः —

युवानो यत्र संक्षिप्तान्[1] साध्वसव्रीलितादिभिः ॥ २२२ ॥
उपचारान्[2] निषेवन्ते स संक्षिप्त इतीरितः ।

पुरुषगतसाध्वसेन संक्षिप्तो यथा—

§ 'ळीळाए तुळिअसेळो रक्खदु वो राहिआइ थणपट्ठे ।
हरिणो पुढमसमाअमसद्धसवसवेविळो हत्थो ॥'

स्त्रीगतसाध्वसात् संक्षिप्तो यथा —

'चुम्बनेष्वधरदानवर्जितं सन्नहस्तमदयोपगूहने ।
दृष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम् ॥'

अथ सङ्कीर्णः —

सङ्कीर्णस्तु भवेद्[3] यत्र व्यलीकस्मरणादिभिः ॥ २२३ ॥
सङ्कीर्णमानः सम्भोगः किञ्चित्[4] पुष्पेषुपेशलः ।

यथा —

'विमर्दरम्याणि समत्सराणि
विभेजिरे तैर्मिथुनै रतानि ।
वैयात्यविस्रम्भविकल्पितानि
मानावसादाद् विशदीकृतानि ॥'

अथ[5] सम्पन्नः —

भयव्यलीकस्मरणाद्यभावात्[6] प्राप्तवैभवः ॥ २२४ ॥
प्रोषितागतयोर्यूनोर्भोगः सम्पन्न ईरितः ।

---

१. 'प्ता सा', २. 'रोध नि', ३ 'पराधीनव्य', ४. 'त् तसेक्षुपे' ग. घ. पाठः ५. 'थ परिस' क. पाठ. ६. णात् स्वभा' ङ पाठः.

---

§ लीलया तुलितशैलो रक्षतु वो राधायाः स्तनपृष्ठे ।
हरेः प्रथमसमागमसाध्वसवशवेपनशीलो हस्तः ॥

यथा —

* 'दन्तक्खअं कवोले कअग्गहुव्वेल्लिओ अ धम्मिल्लो ।
परिचुम्बिआ अ दिट्ठी पिआअमं सूअइ वहूए ॥'

अत्राप्रथमसम्भोगत्वाद् भयाभावः, दन्तक्षतादिष्वङ्गार्पणानुकूल्येन व्यलीकस्मरणाद्यभावः, ताभ्यामुपरूढवैभवः सम्पद्यते ।

अथ समृद्धिमान् —

पुनरुज्जीवतां[1] भोगसमृद्धिः कियती भवेत् ॥ २२५ ॥
शिवाभ्यामेव विज्ञेय इत्ययं हि समृद्धिमान् ।

यथा —

'चन्द्रापीडं सा च जग्राह कण्ठे
कण्ठस्थानं जीवितं च प्रपेदे ।
तेनापूर्वां सा समुल्लासलक्ष्मी-
मिन्दुरपृष्टां सिन्धुलेखेव भेजे ॥'

यथा वा —

† 'अकलिअपरिरम्भविब्भमाइ
अजणिअचुम्बणडम्बराइ दूरं ।
अघडिअघणताडणाइ णिच्चं
णमह अणङ्गरहीण मोहणाइं ॥'

---

१ 'ने' ग पाठः.

* दन्तक्षत कपोले कचग्रहोद्वेल्लितश्च धम्मिल्ल ।
परिचुम्बिता च दृष्टि प्रियागम सूचयति वध्वा. ॥

† अकलितपरिरम्भविभ्रमाण्यजनितचुम्बनडम्बराणि दूरम् ।
अघटितघनताडनानि नित्यं नमतानङ्गरत्योर्मोहनानि ॥

अत्र पुनरुज्जीवितेन कामेन सह रत्या रतेर्बाह्योपचारोपेक्षयैव तत्फलरूपसुखप्राप्तिकथनात् सम्भोगः समृध्यते ।

अथ हास्यं—

विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ॥ २२६ ॥
हासः सदस्यरस्यत्वं नीतो हास्य इतीर्यते ।
तत्रालस्यग्लानिनिद्राबोधाद्या व्यभिचारिणः ॥ २२७ ॥
एष द्वेधा भवेदात्मपरस्थितिविभागतः ।
आत्मस्थस्तु यदा स्वस्य विकारैर्हसितः स्वयम् ॥ २२८ ॥

यथा बालरामायणे—'भिङ्गिरिटिः—(आत्मानं निर्वर्ण्य सोपहासम्) अहो त्रिभुवनाधिपतेरनुचरस्य महार्हवेषता ।

कौपीनाच्छादने वल्कमक्षसूत्रं जटाच्छटाः ।
रुद्राक्षैस्त्रिपुण्ड्रं च वेषो भिङ्गिरिटेरयम् ॥'

अत्र भिङ्गिरिटिः स्ववेषवैकृतेन स्वयमात्मानं हसति ।

परस्थस्तु परप्राप्तैरेतैर्हसति चेत् परम् ।

यथा—

'त्रस्तः समस्तजनहासकरः करेणो-
स्तावत् खरः प्रखरमुल्ललयाञ्चकार ।
यावच्चलासनविलोलनितम्बबिम्ब-
विस्रस्तवस्त्रमवरोधवधूः पपात ॥'

---

१. 'नय वेष । कौ', २. 'क्ष च त्रिपु' क. पाठः.

प्रकृतिवशात् स च षोढा स्मितहसिते विहसितावहसिते च ।
अपहसितातिहसितके ज्येष्ठादीनां क्रमाद् द्वे द्वे ॥

स्मितं चालक्ष्यदशनं दृक्कपोलविकासकृत् ॥ २३० ॥

यथा —

'उत्फुल्लगण्डमण्डलमुल्लासितदृगन्तसूचिताकूतम् ।
[1]नमितं तया मुखाम्बुजमुन्नमितं [3]रङ्गसाम्राज्यम् ॥'

अत्र गण्डमण्डलविकासदृगन्तोल्लासाभ्यां नायिकायाः स्मितं व्यज्यते ।

तदेव लक्ष्यदशनशिखरं हसितं भवेत् ।

यथा —

'स्मयमानमायताक्ष्याः किञ्चिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥'

अत्र किञ्चिदभिव्यक्तदशनत्वादिदं हसितम् ।

तदेव कुञ्चितापाङ्गगण्डं मधुरनिस्वनम् ॥ २३१ ॥
कालोचितं सानुरागमुक्तं विहसितं भवेत् ।

यथा —

'सविधेऽपि मय्यपश्यति शिशुजनचेष्टाविलोकनव्याजात् ।
हसितं स्मरामि तस्याः सस्वनमाकुञ्चितापाङ्गम् ॥'

फुल्लनासापुटं यत् स्यान्निकुञ्चितशिरोंसकम् ॥ २३२ ॥
जिह्मावलोकिनयनं तच्चावहसितं मतम् ।

---

१. 'ला' ग. घ. पाठः. २. 'अपयान्त्या हि मु', ३. 'रागसा' क. पाठः.

यथा —

'खर्वाटधम्मिल्लभरं करेण संस्पृष्टमात्रं पतितं विलोक्य ।
निकुञ्चितांसं कुटिलेक्षणान्तं फुल्लाग्रनासं हसितं सखीभिः ॥'

कम्पिताङ्गं साश्रुनेत्रं तच्चापहसितं भवेत् ॥ २३३ ॥

यथा —

'समं पुत्रप्रेम्णा करटयुगलं चुम्बितुमनो
गजास्ये कृष्टास्ये निबिडमिलदन्योन्यवदनम् ।
अपायात् पायाद् वः प्रमथमिथुनं वीक्ष्य तदिदं
हसन् क्रीडानृत्तश्लथचलिततुन्दः स च शिशुः ॥'

करोपगूढपार्श्वं यदुद्धतायतनिस्वनम् ।
बाष्पाकुलाक्षयुगलं तच्चातिहसितं भवेत् ॥ २३४ ॥

यथा —

'इति वाचमुद्धतमुदीर्य सपदि सह वेणुदारिणा ।
सोढरिपुबलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः ॥'

अथ वीरः —

विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
नीतः सदस्यरस्यत्वमुत्साहो वीर उच्यते ॥ २३५ ॥

एष त्रिधा समासेन दानयुद्धदयोद्भवाः ।
दानवीरे धृतिर्हर्षो मत्याद्या व्यभिचारिणः ॥ २३६ ॥
स्मितपूर्वाभिलापित्वं स्मितपूर्वं च वीक्षितम् ।

प्रसादे बहुदातृत्वं तद्वद्वाचानुमोदितम् ॥ २३७ ॥
गुणागुणविचाराद्यास्त्वनुभावाः समीरिताः ।

यथा —

'अमुष्मै चोराय प्रतिहतभिये भोजनृपतिः
परं प्रीतः प्रादादुपरितनपादद्वयकृते ।
सुवर्णानां कोटीर्दश दशनकोटिक्षतहरीन्
करीन्द्रानप्यष्टौ मदमुदितगुञ्जन्मधुलिहः ॥'

युद्धवीरे हर्षगर्व[1]मोदाद्या व्यभिचारिणः ॥ २३८ ॥
असाहाय्येऽपि युद्धेच्छा समरादपलायनम् ।
भीताभयप्रदानाद्या विकारास्तत्र कीर्तिताः ॥ २३९ ॥

यथा —

'रथी निषङ्गी कवची धनुष्मान् दृप्तः स राजन्यकमेकवीरः ।
विलोलयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥'

दयावीरे धृतिमतिप्रमुखा व्यभिचारिणः ।
स्वार्थप्राणव्ययेनापि विपन्नत्राणशीलता ॥ २४० ॥
आश्वासनोक्तयः स्थैर्यमित्याद्यास्तत्र विक्रियाः ।

यथा—

'आर्तं कण्ठगतप्राणं परित्यक्तं स्वबान्धवैः ।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः ॥'

---

१. 'मत्याद्या' क. पाठः.

अथाद्भुतं —

विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ॥ २४१ ॥

नीतः सदस्यरस्यत्वं विस्मयोऽद्भुततां व्रजेत् ।

अत्र धृत्यावेगजाड्यहर्षाद्या व्यभिचारिणः ॥ २४२ ॥

चेष्टास्तु नेत्रविस्तारस्वेदाश्रुपुलकादयः ।

यथा —

'सोढाहे नमतेति दूतमुखतः कार्योपदेशाद्वरं
तत्तादृक् समराङ्गणेषु भुजयोर्विक्रान्तमव्याहतम् ।
भीतानां परिरक्षणं पुनरपि स्वे स्वे पदे स्थापनं
स्मारं स्मारमरातयः पुलकिता रेचल्लशिङ्गप्रभोः ॥'

अत्र नायकगुणातिशयजनितो विरोधिनां विस्मयस्मृतिहर्षादिभिर्व्यभिचारिभिरुपचितः पुलकादिभिरनुभावैर्व्यज्यमानोऽद्भुतत्वमापद्यते ।

अथ रौद्रः—

विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ॥ २४३ ॥

क्रोधः सदस्यरस्यत्वं नीतो रौद्र इतीर्यते ।

आवेगगर्वौग्र्यामर्षमोहाद्या व्यभिचारिणः ॥ २४४ ॥

प्रस्वेदभ्रुकुटीनेत्ररागाद्यास्तत्र विक्रियाः ।

यथा करुणाकन्दले —

'आत्माक्षेपक्षोभितैः पीडितोष्ठैः प्रासोद्योगैर्यौगपद्यादभेदैः ।
भिन्धिच्छिन्धिध्वानिनिर्भिन्नगैर्दर्पान्धैर्वैरानिरुद्धैर्निरुद्धः ॥'

---

१. 'न्त' ख. ग. पाठः.

अत्र वज्रविषयो भिल्लवर्गक्रोधः स्वात्माक्षेपादिभिरुद्दीपितो दर्पान्धपुरुषवागाद्यनुमितैर्गर्वासूयादिभिः परिपोषितः स्वोष्ठपीडनशत्रुविरोधादिभिरनुभावैरभिव्यक्तो रौद्रतया निष्पद्यते ।

अथ करुणः—

विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ॥ २४५ ॥
नीतः सदस्यरस्यत्वं शोकः करुण उच्यते ।
अत्राष्टौ सात्त्विका जाड्यनिर्वेदग्लानिदीनताः ॥ २४६ ॥
आलस्यापस्मृतिव्याधिमोहाद्या व्यभिचारिणः ।

यथा करुणाकन्दले—

'कुलस्य व्यापत्त्या सपदि शतधोद्दीपिततनु-
मुहुर्बाष्पं श्वासान्मलिनमपि रागं प्रकटयन् ।
श्लथैरङ्गैः शून्यैरसकृदुपरुद्धैश्च करणै-
र्युतो धत्ते ग्लानिं करुण इव मूर्तो यदुपतिः ॥'

अत्र बन्धुव्यापत्तिजनितो वासुदेवस्य शोको बन्धुगुणस्मरणादिभिरुद्दीपितो मलिनत्वेन्द्रियशून्यत्वादिसूचितैर्दैन्यमोहग्लान्यादिसञ्चारिभिः प्रपञ्चितो मुहुर्बाष्पश्वासमलिनमुखरागादिभिरनुभावैरभिव्यक्तः करुणत्वमापद्यते ।

अथ बीभत्सः—

विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ॥ २४७ ॥
जुगुप्सा पोषमापन्ना बीभत्सत्वेन रस्यते ।
अत्र ग्लानिश्रमोन्मादमोहापस्मारदीनताः ॥ २४८ ॥

विषादचापलावेगजाड्याद्या व्यभिचारिणः ।
स्वेदरोमाञ्चनासाग्राच्छादनाद्याश्च विक्रियाः ॥ २४९ ॥

यथा—

'अंहश्शेषैरिव परिवृतो मक्षिकामण्डलीभिः
पूयक्लिन्नं व्रणमभिमृशन् वाससः खण्डकेन ।
रथ्योपान्ते द्रुतमुपसृतं सङ्कुचन्नेत्रकोणं
छन्नघ्राणं रचयति जनं दद्रुरोगी दरिद्रः ॥'

अत्र दद्रुरोगिविषयरथ्याजनजुगुप्सा मक्षिकापूयादिभिरुद्दीपिता त्वरापसरणानुमितैर्विषादादिभिः पोषिता नेत्रसङ्कोचनादिभिरभिव्यक्ता बीभत्सतामाप्नोति ।

अथ भयानकः—

विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
भयं सदस्यरस्यत्वं नीतं प्रोक्तं भयानकः ॥ २५० ॥

तत्र सन्त्रासमरणचापलावेगदीनताः ।
विषादमोहापस्मारशङ्काद्या व्यभिचारिणः ॥ २५१ ॥

विक्रियास्त्वास्यशोषाद्याः सात्त्विकाश्चाश्रुवर्जिताः ।

यथा—

'श्रीशिङ्गक्षितिनायकस्य रिपवो धाटीश्रुतेराकुलाः
शुष्यत्तालुपुटं स्खलत्पदतलं व्यालोकयन्तो दिशः ।
धावित्वा कथमप्युपेत्य तमसा गाढोपगूढां गुहा-
मन्विष्यन्ति तदन्तरे करतलस्पर्शेन गर्तान्तरम् ॥'

अत्र नायकप्रतिभूपतीनां भयं तद्धाटीश्रवणादिनोद्दीपितं व्याकुलत्वतालुशोषपदस्खलनाद्यनुमितैरावेगशङ्कात्रासादिभिर्व्यभिचारिभिरुपचितं पलायनगुहाप्रवेशगर्तान्तरान्वेषादिभिरनुभूयमानं भयानकत्वेन निष्पद्यते ।

केचित् समानबलयोरनयोः सङ्करं विदुः ॥ २५२ ॥

न परीक्षाक्षममिदं मतं प्रेक्षावतां भवेत् ।
तुल्यत्वे पूर्वमास्वादः कतरस्येत्यनिश्चयात् ॥ २५३ ॥

स्पर्धापरत्वादुभयोरनास्वादप्रसङ्गतः ।
तयोरन्यतरस्यैव प्राधान्यादास्वादनादपि ॥ २५४ ॥

युगपद्रसनीयत्वं नोभयोरुपपद्यते ।
एषामङ्गाङ्गिभावेन सङ्करो मम सम्मतः ॥ २५५ ॥

तथाच भारतीये—

'भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ।
सर्वेषां समवेतानां यस्य रूपं भवेद् बहु ॥
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ।'

इति ।

तुलाधृतत्वमुभयोर्न स्यात् प्रकरणादिना ।
कवितात्पर्यविश्रान्तेरेकत्रैवावलोकनात् ॥ २५६ ॥

उभौ शृङ्गारबीभत्सावुभौ वीरभयानकौ ।
रौद्राद्भुतावुभौ हास्यकरुणौ प्रकृतिद्विषौ ॥ २५७ ॥

स्वभाववैरिणोरङ्गाङ्गिभावेनापि मिश्रणम् ।
विवेकिभ्यो न स्वदते गन्धगन्धकयोरिव ॥ २५८ ॥

विरोधिनोऽपि सान्निध्याददतिरस्कारलक्षणम् ।
पोषणं प्रकृतस्येति चेदङ्गत्वं न तावता ॥ २५९ ॥
यत्किञ्चिदुपकारित्वादङ्गस्याङ्गत्वमङ्गिनि ।
तत्सन्निधानमात्रेण चर्वणानुपकारतः ॥ २६० ॥
अन्यथा पानकाद्येषु शर्करादेरिवापतेत् ।
अन्तरा पतितस्यापि तृणादेरुपकारिता ॥ २६१ ॥
तच्चर्वणाभिमाने स्यात् सतृणाभ्यवहारिता ।

निसर्गवैरिणोरङ्गाङ्गिभावात् स्वादाभावो यथा—

'लालाजलं स्रवतु वा दशनास्थिपूर्ण-
मप्यस्तु वा रुधिरबन्धुरिताधरं वा ।
सुस्निग्धमांसकललोज्ज्वललोचनं वा
संसारसारमिदमेव मुखं भवत्याः ॥'

अत्र शृङ्गाररसाङ्गतामङ्गीकृतवता बीभत्सेनाङ्गिनोऽपि विच्छेदाय मूले कुठारो व्यापारितः । एवमन्येषामपि विरोधिनामङ्गाङ्गिभावेनास्वादाभावस्तत्र तत्रोदाहरणे द्रष्टव्यः ।

भृत्ययोर्नायकस्येव निसर्गद्वेषिणोरपि ॥ २६२ ॥
अङ्गयोरङ्गिनो वृद्धौ भवेदेकत्र सङ्गतिः ।

यथा —

'कस्तूर्या तत्कपोलद्वयभुवि मकरीनिर्मितौ प्रस्तुतायां
निर्मित्सूनां स्ववक्षस्यतिपरिचयनात् त्वत्प्रशस्तीरुपांशु ।
वीरश्रीशिङ्गभूप! त्वदरिमहिभुजां राज्यलक्ष्मीसपत्नी-
मानव्याजेन लज्जां सपदि विदधते स्वावरोधाः प्रगल्भाः ॥'

---

१. 'तरुण्याः ।', २. 'तत्प्रशान्तीरु' क. पाठः.

अत्र प्रतिनायकगतयोः शृङ्गारबीभत्सयोर्नायकगतवीररसाङ्गत्वादेकत्र समावेशो न दोषाय ।

नन्वत्र शत्रूणां स्ववक्षसि नायकबिरुदविलेखनेन जीवितान्तनिर्मित्सया जनिता निजजीवितजुगुप्सा स्वावरोधसान्निध्यादिभिरुद्दीपिता लज्जानुमितैर्निर्वेददैन्यविषादादिभिरुपचिता तदनुमितैरेव मानसिककुत्सादिभिरभिव्यक्ता सती नायकगतं शरणागतरक्षालक्षणं वीरं पुष्णातीति प्रतीयते । न पुनः प्रतिनायकगतस्य शृङ्गारस्य नायकवीरोपकरणत्वम् । उच्यते । नायककृपाकटाक्षप्रसादस्थिरीकृतराज्यानां प्रतिनायकानां तादृशा विनोदाः सम्भवेयुः, नान्यत्रेति तस्य शृङ्गारस्य नायकवीरोपकरणत्वं बिरुदधारणादिपरिचयेन राज्यलक्ष्मीसपत्नीपदप्रयोगेणाभिव्यज्यते ।

अथ रसाभासः—

अङ्गेनाङ्गी रसः स्वेच्छावृत्तिवर्धितसम्पदा ॥ २६३ ॥
अमात्येनाविनीतेन स्वामीवाभासतां व्रजेत् ॥ २६३½ ॥

तथाच भावप्रकाशिकायां—

'शृङ्गारो हास्यभूयिष्ठः शृङ्गाराभास ईरितः ।
हास्यो बीभत्सभूयिष्ठो हास्याभास इतीरितः ॥
वीरो भयानकप्रायो वीराभास इतीरितः ।
अद्भुतः करुणाश्लेषादद्भुताभास उच्यते ॥
रौद्रः शोकभयाश्लेषाद् रौद्राभास इतीरितः ।
करुणो हास्यभूयिष्ठः करुणाभास उच्यते ॥

बीभत्सोऽद्भुतशृङ्गारी बीभत्साभास उच्यते ।
स स्याद् भयानकाभासो रौद्रवीरोपसङ्गमात् ॥'

इति । अत्र शृङ्गाररसस्यारागादनेकरागात् तिर्यग्रागान्म्लेच्छरागाच्चेति चतुर्विधमाभासभूयस्त्वम् ।

तत्रारागस्त्वेकत्र रागाभावः, तेन रसस्याभासत्वं यथा—

'स रामो नः स्थाता न युधि पुरतो लक्ष्मणसखो
भवित्री रम्भोरु! त्रिदशवदनग्लानिरधुना ।
प्रयास्यत्येवोच्चैर्विपदमचिराद् वानरचमू-
र्लंघिष्ठेदं षष्ठाक्षरपरविलोपात् पठ पुनः ॥'

अत्र सीतायां रावणविषयरागात्यन्ताभावादाभासत्वम् ।

नन्वेकत्र रागाभावाद् रसस्याभासत्वं न युज्यते । प्रथममजातानुरागे वत्सराजे जातानुरागाया रत्नावल्याः—

$'दुळ्ळहजणाणुराओ ळज्जा गुरुई परव्वसो अप्पा ।
पिअसहि! विसमं पेम्मं मरणं सरणं णु वरमेक्कं ॥'

इत्यत्र पूर्वानुरागस्याभासत्वप्रसङ्ग इति चेद्, उच्यते । अभावो हि त्रिविधः प्रागभावोऽत्यन्ताभावः प्रध्वंसाभावश्चेति । तत्र प्रागभावे दर्शनादिकारणेषु रागोत्पत्तिसम्भावनया (ना)भासत्वम्, इतरयोस्तु कारणसद्भावेऽपि रागानुत्पत्तेराभासत्वमेव । अन्ये तु स्त्रिया एव रागाभावे रसस्याभासत्वं प्रतिजानते । न तदुपपद्यते । पुरुषेऽपि रागाभावे रसस्यानास्वादनीयत्वात् ।

---

$ दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि ! विषम प्रेम मरणं शरणं नु वरमेकम् ।

यथा—

'गते प्रेमावेशे प्रणयबहुमानेऽपि गलिते
निवृत्ते सद्भावे प्रणयिनि जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि! गतांस्तांश्च दिवसान्
न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥'

अत्र हृदयदलनाभावपूर्वगतदिवसोत्प्रेक्षाद्यनुमितैर्निर्वेदस्मृत्यादिभिरभिव्यक्तोऽपि स्त्रिया अनुरागः प्रेमावेशश्लथनादिकथितेन पुरुषगतरागध्वंसनेन चारुतां नाप्नोति ।

पुरुषरागात्यन्ताभावेन रसाभासत्वं यथा—

'ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बोधौ जिनः पातु वः ॥

अत्र जिनस्य रागात्यन्ताभावेन रसाभासत्वम् ।

अनेकत्र योषितो रागाभासत्वं यथा—

'परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थनयोर्विवादः ॥'

अत्र कस्याश्चिद् दिव्यवनिताया वीरद्वये रणानिवृत्तिमरणप्राप्तदेवताभावेऽनुरागस्य निरुपमानशूरगुणोपादेयतादेरवैषम्येण प्रतिभासनादाभासत्वम् ।

अनेकत्र पुंसो रागाद् यथा—

'रम्यं गायति मेनका कृतरुचिर्वीणास्वनैरुर्वशी
चित्रं वक्ति तिलोत्तमा परिचयं नानाङ्गहारक्रमे।
आसां रूपमिदं तदुत्तममिति प्रेमानवस्था द्विषा
भेजे श्रीयनपोतशिङ्गनृपते! त्वत्खड्गभिन्नात्मना॥'

अत्र नायकखड्गधारागलितात्मनः कस्यचित् स्वर्गतप्रतिनायकवीरस्य मेनकादिस्वर्लोकगणिकास्व वैषम्येण रागादाभासत्वम्।

नन्वेवं दक्षिणादीनामपि रागस्याभासत्वमिति चेद्, न। दक्षिणस्य नायकस्य नायिकास्वनेकासु वृत्तिमात्रेणैव साधारण्यं, न रागेण। तदेकस्यामेव रागस्य प्रौढत्वमितरासु तु मध्यमत्वं मन्दत्वं चेति तदनुरागस्य नाभासता। अत्र तु वैषम्येणानेकत्र प्रवृत्तेराभासत्वमुपपद्यते।

तिर्यग्रागाद् यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥'

म्लेच्छरागाद् यथा—

*'अज्जं मोहणसुत्तं मिअत्ति मत्तूण धाविए हलिए।
दरफुडिअबोडभारोअराहि हसिअं व फळहीहिं॥'

अत्र सुरतमोहनसुप्तिमरणदशयोर्विवेकाभावेन हालिकस्य म्लेच्छत्वं गम्यते।

---

* आर्यां मोहनसुप्तां मृतेति मत्वा धाविते हालिके।
दरस्फुटितफलोदराभिर्हसितमिव कार्पासलताभिः॥

ननु तिर्यङ्म्लेच्छगतयोराभासत्वं न युज्यते । तयोर्विभावादिसंभवात् । असंभवे नास्वादयोग्यता इति चेद्, न । भो म्लेच्छरसवादिन्! उत्कलाधिपतेः शृङ्गाररसाभिमानिनो नरसिंहदेवस्य चित्तमनुवर्तमानेन विद्याधरेण कविना बाढमभ्यन्तरीकृतोऽसि । एवं खलु समर्थितमेकावल्यामनेन — अपरे तु, रसाभासं तिर्यक्षु प्रचक्षते।(तत्) न परीक्षाक्षमम् । तेष्वपि विभावादिसम्भवात् । विभावादिज्ञानशून्यास्तिर्यञ्चो न भाजनं भवितुमर्हन्ति रसस्येति चेद्, न । मनुष्येष्वपि केषुचित् तथाभूतेषु रसाविषयाभासप्रसङ्गात् । अत्र विभावादिसम्भवोऽपि रसं प्रति प्रयोजकः । न विभावादिज्ञानम् । ततश्च तिरश्चामस्त्येव रस इति । न तावत् तिरश्चां विभावत्वमुपपद्यते । शृङ्गारे हि समुज्ज्वलस्य शुचिनो दर्शनीयस्यैव वस्तुनो मुनिना विभावत्वेनाम्नानात् । तिरश्चामुद्वर्तनमज्जनाकल्परचनाद्यभावाद् उज्ज्वलशुचिदर्शनीयत्वानामसम्भावना प्रसिद्धैव । अथ स्वजातियोग्यधर्मैः करिणां करिणीं प्रति विभावत्वमिति चेद्, न । तस्यां कक्ष्यायां करिणां करिणीरागं प्रति कारणत्वं न पुनर्विभावत्वम् । किञ्च जातियोग्यैर्धर्मैर्वस्तुनो न विभावत्वम्, अपि तु भावकचित्तोल्लासहेतुभी रतिविशिष्टैरेव । किञ्च, विभावादिज्ञानं नामौचित्यविवेकः, तेन शून्यास्तिर्यञ्चो न विभावतां यान्ति । तर्हि विभावादिज्ञानरहितेषु मनुष्येषु रसाभासप्रसङ्ग इति चेद्, नैष दोषः । विवेकरहितजनोपलक्षण-

$ 'यभावाभावम' मुद्रितैकावलीपाठः ।

म्लेच्छगतस्य रसस्याभासत्वे स्वेष्टावाप्तेः । किञ्च विभावादिसम्भवोऽपि रसं प्रति प्रयोजको नहि विभावादिज्ञानमित्येतद् (न) युज्यते । तथाहि विभावादेर्विशिष्टस्य वस्तुमात्रस्य वा संभवो रसं प्रति प्रयोजकः । विशिष्टप्रयोजकत्वाङ्गीकारे विवेकादिप्रवेशोऽङ्गीकृत इत्यस्मदनुसरणमेव शरणं गतोऽसि । अत्र विवेकं विना तदितरविशेषवत्त्वं वैशिष्ट्यमिति चेद् , न । विशेषाणां धर्मिणि परमोत्कर्षानुसन्धानतत्पराणामन्योन्यसहिष्णूनामियत्तया नियमासम्भवात् । अथ यदि वस्तुमात्रस्य, तर्हि

'अन्वासीनमरुन्धत्या स्वाहयेव हविर्भुजम्'

इत्यादावपि स्त्रीपुंसव्यक्तिमात्रविभावसद्भावादन्वासनालक्षणानुभावसम्भवाच्च श्रृङ्गारः स्वदनीयः प्रसज्यते । किञ्च,

§'अज्जं मोहणसुत्तं मिअत्ति मत्तूण धाविए हळिए ।
दरफुडिअबोडभारोअराहिं हसिअं व फळहीहिं ॥'

इत्यादिषु स्त्रीपुंसव्यक्तिमात्रविभावसद्भावः । तदविवेकजनितहास्यपङ्कनिर्मग्नं श्रृङ्गारगन्धगजमुद्धर्तुं त्वरतामित्यलं रसाभासापलापसंरम्भेण । ननु सीता(दि)विभावैर्वस्तुमात्रैरेव

---

१. 'यामील्य' ख घ. पाठः.

---

§ आर्यां मोहनसुप्तां मृतेति मत्वा धाविते हालिके ।
दरस्फुटितफलोदराभिर्हसितामिव कार्पासलताभिः ॥

योषिन्मात्रप्रतीतौ सामाजिकानां रसोदयः, न पुनर्विशिष्टैः, तत् कथमिति चेद्, उच्यते। अत्र जनकतनयात्वरामपरिग्रहत्वादिविरुद्धधर्मपरिहारेण ललितोज्ज्वलशुचिदर्शनीयत्वादिविशिष्ट एव (श्रि ? श्रु)तः सीतादिविभावो योषित्सामान्यं तादृशमेव ज्ञापयति। न पुनः स्त्रीजातिमात्रमिति सकलमपि कल्याणम्।

हरिश्चन्द्रो रक्षाकर(रुचिर ? रचन)सत्येषु वचसां
विलासे वागीशो महति नियमे नीतिनिगमे।
विजेता गाङ्गेयं जनभरणसम्मोहनकला-
व्रतेषु श्रीशिङ्गक्षितिपतिरुदारो विहरते ॥ २६४½ ॥

नित्यं श्रीयन्नपोतक्षितिपतिजनुषः शिङ्गभूपालमौलेः
सौन्दर्यं सुन्दरीणां हरिणविजयिनां वागुरा लोचनानाम्।
दानं मन्दारचिन्तामणिसुरसुरभीगर्वनिर्वापणाङ्कं
विज्ञानं सर्वविद्यानिधिमु(षि ? नि)परिषच्छेमुषीभाग्यरेखा॥

इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगण्डभैरवश्रीमदनपोतनरेन्द्रनन्दनभुजबलभीमश्रीशिङ्गभूपालविरचिते रसार्णवसुधाकरनामनि नाट्यालङ्कारे रसिकोल्लासो नाम

द्वितीयो विलासः ॥

---

## अथ तृतीयो विलासः ।

तदीदृशरसाधारं नाट्यं रूपकमित्यपि ।
नटस्यातिप्रवीणस्य कर्मत्वान्नाट्यमुच्यते ॥ १ ॥

यथा मुखादौ पद्मादेरारोपे रूपकप्रथा ।
तथैव नायकारोपो नटे रूपकमुच्यते ॥ २ ॥

तत्र नाट्यं दशविधं वाक्यार्थाभिनयात्मकम् ।

तथा च भारतीये—

'नाटकं सप्रकरणमङ्को व्यायोग एव च ।
भाणः समवकारश्च वीथी प्रहसनं डिमः ॥
ईहामृगश्च विज्ञेयं दशधा नाट्यमित्यपि ।'
रसेतिवृत्तनेतारस्तत्तद्रूपकभेदकाः ॥ ३ ॥

रक्षितारस्तु नेतार इतिवृत्तं तु कथ्यते ।
इतिवृत्तकथावस्तुशब्दाः पर्यायवाचिनः ॥ ४ ॥
इतिवृत्तं प्रबन्धस्य शरीरं त्रिविधं हि तत् ।
ख्यातं कल्प्यं च सङ्कीर्णं ख्यातं रामकथादिकम् ॥ ५ ॥
कविबुद्धिकृतं कल्प्यं मालतीमाधवादिकम् ।
सङ्कीर्णमुभयायत्तं लवराघवचेष्टितम् ॥ ६ ॥
लक्ष्ये स्थि (ते ? तं) तु बहुधा दिव्यमर्त्यादिभेदतः ।
तच्चेतिवृत्तं विद्वद्भिः पञ्चधा परिकीर्तितम् ॥ ७ ॥
बीजं बिन्दुः पताका च प्रकरी कार्यमित्यपि ।
यत्तु स्वल्पमुपक्षिप्तं बहुधा विस्तृतिं गतम् ॥ ८ ॥

कार्यस्य कारणं प्राज्ञैस्तद् बीजमिति कथ्यते ।
उप्तं बीजं तरोर्यद्वदङ्कुरादिप्रभेदतः ॥ ९ ॥
फलाय कल्पते तद्वन्नायकादिविभेदतः ।
फलाय तद् भवेद् यस्माद् बीजमित्यभिधीयते ॥

यथा बालरामायणे प्रथमद्वितीयाङ्कयोः कल्पिते मुख-सन्धौ स्खलो रामोत्साहो बीजमित्युच्यते ।

अथ बिन्दुः—

फले प्रधाने बीजस्य प्रसङ्गोक्तैः फलान्तरैः ।
विच्छिन्ने यदविच्छेदकारणं बिन्दुरिष्यते ॥ ११ ॥
जलबिन्दुर्यथा सिञ्चंस्तरुमूलं फलाय हि ।
तथैवायं मुहुः क्षिप्तो बिन्दुरित्यभिधीयते ॥ १२ ॥

यथा तत्रैव तृतीयचतुर्थाङ्कयोः कल्पिते प्रतिमुखसन्धौ विक्षिप्ते रावणविरोधमूलं सीतापरिग्रहो बिन्दुरित्युच्यते।

अथ पताका—

यत् प्रधानोपकरणप्रसङ्गात् स्वार्थमृच्छति ।
सा स्यात् पताका सुग्रीवमकरन्दादिवृत्तवत्॥ १३ ॥
यत् केवलं परार्थस्य साधनं च प्रदेशभाक् ।
प्रकरी सा तु हनुमत्सौदामन्यादिवृत्तवत् ॥ १४ ॥

पताकाप्रकरीव्यपदेशो भावप्रकाशिकाकारेणोक्तः—
'यथा पताका कस्यापि शोभाकृच्चिह्नरूपतः ।

---

१. 'भेदता' ब. पा.

स्वस्योपनायकादीनां वृत्तान्तरतद्वदुच्यते ॥
शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः ।
*तथा तु वर्णनादिस्तु प्रसङ्गौ (?) प्रकरी भवेत् ॥'

इति ।

अथ पताकास्थानकानि—

अङ्कस्य च प्रधानस्य भाव्यवस्थस्य सूचकम् ।
यदागन्तुकभावेन पताकास्थानकं हि तत् ॥ १५ ॥

एतद् द्विधा तुल्यसंविधानं तुल्यविशेषणम् ।
तत्राद्यं त्रिप्रकारं स्याद् द्वितीयं त्वेकमेव हि ॥ १६ ॥

एवं चतुर्विधं ज्ञेयं पताकास्थानकं बुधैः ।

तथा च भरतः—

'सहसैवार्थसम्पत्तिगुणवृत्त्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥'

इति । यथा रत्नावल्यां—'विदूषकः— भो! इअं देवी वासवदत्ता । (राजा साशङ्कं रत्नावलीं विसृजति ।)' इत्यत्रेयं वासवदत्तेत्यनेनोपचारप्रयोगेण भाविनो वासवदत्ताकोपस्य सूचनात् सहसार्थसम्पत्तिरूपमिदमेकं पताकास्थानकम् ।

तथा च—

'वचः सातिशयं श्लिष्टं काव्यबन्धरसाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥'

इति । यथा उत्तररामचरिते—'रामः—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।

---

* 'तथर्द्धुवर्णनादिस्तु प्रसङ्ग प्रकरी भवेद्' इत्येव पाठ भवेत् ।

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

(प्रविश्य) प्रतिहारी—उवट्ठिओ। रामः—अये कः।' इत्यत्र भविष्यतः सीताविरहस्य सूचनादिदं श्लिष्टं नाम द्वितीयं पताकास्थानकम्। तथा च—

'अर्थोपक्षेपणं यत्तु लीनं साविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥'

इति। यथा वेणीसंहारे—'राजा—

लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य।
अध्यासितं च सुचिरं जघनस्थलस्य
पर्याप्तमेव करभोरु! तवोरुयुग्मम् ॥

(प्रविश्य सम्भ्रान्तः) कञ्चुकी—देव! भग्नं देव! भग्नम्। राजा—किं नाम। कञ्चुकी—भग्नं भीमेन। राजा—आः किं प्रलपसि'। इत्यत्र श्लिष्टप्रत्युत्तरेण कञ्चुकिवाक्येन भाविनो दुर्योधनोरुभङ्गस्य सूचनेन श्लिष्टोत्तरं नाम तृतीयमिदं पताकास्थानकम्। तथा च—

'(व्य ? द्व्य)र्थो वचनविन्यासः सुश्लिष्टः काव्ययोजकः।
उपन्यासेन युक्तस्तु तच्चतुर्थमुदाहृतम् ॥'

इति । यथा—

'उद्दामोत्कलिकां विपाण्डररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥'

इत्यत्र विशेषणश्लेषेण भाविनो रत्नावलीसन्दर्शनस्य सूचनात् तुल्यविशेषणं नाम चतुर्थं पताकास्थानकमिदम् ।

अथ कार्यं—

वस्तुनस्तु मतं तस्य धर्मकामार्थलक्षणम् ॥ १७ ॥
फलं कार्यमिदं शुद्धं मिश्रं वा कल्पयेत् सुधीः ।

शुद्धं यथा मालतीमाधवे— 'कामन्दकी—

यत् प्रागेव मनोरथैर्वृतमभूत् कल्याणमायुष्मतो-
स्तत् पुण्यैर्मदुपक्रमैश्च फलितं क्लेशोऽपि मच्छिष्ययोः ।
निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
सम्प्रीतौ नृपनन्दनौ यदपरं प्रेयस्तदप्युच्यताम् ॥'

इत्यत्र काव्योपसंहारश्लोकेन तृतीयपुरुषार्थस्यैव फलत्वकथनात् शुद्धं कार्यमिदम् ।

मिश्रं यथा बालरामायणे—

'रुग्णं चाजगवं न चातिकुपितो भर्गः सुरग्रामणीः
सेतुश्च ग्रथितः प्रसन्नमधुरो दृष्टश्च वारांनिधिः ।
पौलस्त्यश्चरमस्थितश्च भगवान् प्रीतः श्रुतीनां कविः
प्राप्तं यानमिदं च याचितवते दत्तं कुबेराय च ॥'

इत्यनेनोपसंहारश्लोकेन मिश्रस्य त्रिवर्गफलस्य कथनाद् मिश्रमिदम् ।

प्रधानमङ्गमिति च तद् वस्तु द्विविधं पुनः ॥ १८ ॥
प्रधाननेतृचरितं प्रधानफलबन्धि च ।
काव्ये चापि प्रधानं स्यात् तथा रामादिचेष्टितम् ॥१९॥
नायकार्थकृदङ्गं स्यान्नायकेतरचेष्टितम् ।
नित्यं पताका प्रकरी चाङ्गं बीजादयः क्वचित् ॥ २० ॥
बीजत्वाद् बीजमादौ स्यात् फलत्वान् कार्यमन्ततः ।
तयोः सन्धानहेतुत्वान्मध्ये बिन्दुं मुहुः क्षिपेत् ॥ २१ ॥
यथायोगं पताकायाः प्रकर्याश्च नियोजनम् ।
कार्यस्य पञ्चधावस्था पताकादिक्रियावशात् ॥ २२ ॥
आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः ।
तत्र मुख्यफलोद्योगमात्र आरम्भ इष्यते ॥ २३ ॥

यथा बालरामायणे मुखसन्धौ रामस्य लोकोत्तरोत्कर्षप्राप्तये व्यवसायमात्र आरम्भः ।

अथ यत्नः—

यत्नस्तु तत्फलप्राप्त्यामौत्सुक्येन तु वर्तनम् ।

यथा तत्रैव प्रतिमुखसन्धौ ताटकानिपातनभूतपतिधनुर्दलनादिषु रामस्य यत्नः ।

अथ प्राप्त्याशा—

प्राप्त्याशा तु महार्थस्य सिद्धिसद्भावभावना ॥ २४ ॥

यथा तत्रैव गर्भसन्धौ माल्य(कामा?वन्मा)याप्रयोगवनप्रवाससीतापहरणादिभिरन्तरिताया रामस्य परमोत्कर्षप्राप्तेर्धनु-

भङ्गादिसुग्रीवसन्धिसेतुबन्धनादिभिः सिद्धिसद्भावभावनाकथनात् प्राप्त्याशा।

अथ नियताप्तिः—

नियताप्तिरविघ्नेन कार्यसंसिद्धिनिश्चयः।

यथा तत्रैव विमर्शसन्धौ निखिलरक्षःकुलनिबर्हणादविघ्नेन रामस्य फलसंसिद्धिनिश्चयो नियताप्तिः।

अथ फलागमः—

समग्रेष्टफलावाप्तिर्नायकस्य फलागमः॥ २५॥

यथा तत्रैव निर्वहणसन्धौ रामस्य तातज्ञानिर्वहणवैरप्रशमनराज्योपभोगैर्भोगोत्तरत्रिवर्गफललाभप्राप्तिः फलागमः।

अथ सन्धिः—

एकैकस्यास्त्ववस्थायाः प्रकृत्या चैकयैकया।
योगः सन्धिरिति ज्ञेयो नाट्यविद्याविचक्षणैः॥ २६॥

पताकायास्त्ववस्थानं क्वचिदस्ति न वा क्वचित्।
पताकया विहीने तु बिन्दुं वा विनिवेशयेत्॥ २७॥

मुखप्रयोजनवशात् कथाङ्गानां समन्वये।
अवान्तरार्थसम्बन्धः सन्धिः सन्धानरूपतः॥ २८॥

मुखप्रतिमुखे गर्भविमर्शावुपसंहृतिः।
पञ्चैते सन्धयस्तेषु यत्र बीजसमुद्भवः॥ २९॥

नानाविधानामर्थानां रसानामपि कारणम्।
तन्मुखं तत्र चाङ्गानि बीजारम्भानुरोधतः॥ ३०॥

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ ३१ ॥
उद्भेदभेदकरणामिति द्वादशधोदिताः ।
उपक्षेपस्तु बीजस्य सूचना कथ्यते बुधैः ॥ ३२ ॥

यथा बालरामायणे प्रतिज्ञातपौलस्त्यनामनि प्रथमेऽङ्के — '('ततः प्रविशति विश्वामित्राशिष्यः ।) शिष्यः — प्रातस्सवन एव यजमानं द्रष्टुमिच्छामि' इत्युपक्रम्य 'राक्षसरक्षौषधिं राममानेतुं सिद्धाश्रमादयोध्यां गतवता तातविश्वामित्रेण यज्ञोपनिमन्त्रकस्य परमसुहृदः श्रोत्रियक्षात्रियस्य सीरध्वजस्य स्वप्रतिनिधिः प्रेषितोऽस्मि' इत्यन्तेन रावणादिदुष्टराक्षसशिष्टरामलक्ष्मणोत्साहोपबृंहणकविश्वामित्रारम्भरूपस्य बीजस्य सूचनादुपक्षेपः ।

अथ परिकरः —

परिक्रिया तु बीजस्य बहुलीकरणं मतम् ।

तत्रैव — '(प्रविश्य तापसच्छद्मना) राक्षसः —

सम्प्रेषितो माल्यवताहमद्य
ज्ञातुं प्रवृत्तिं कुशिकात्मजस्य ।
पुरीं निमीनां मिथिलामिमां च
तां चाप्ययोध्यां रघुराजधानीम् ॥

कुलपुत्रकेति सप्रसादमाश्लिष्टोऽस्मि' इत्युपक्रम्य 'स हि नक्तञ्चराणां निसर्गामित्रो विश्वामित्रो व्रतचर्यया वीरव्रतचर्य-

या च समर्थो दशरथोऽपि तथाविध एवे'त्यन्तेन विश्वामित्रारम्भस्य माल्यवदादिवितर्कगोचरत्वेन बहुलीकरणात् परिकरः।

अथ परिन्यासः—

बीजनिष्पत्तिकथनं परिन्यास इतीर्यते ॥ ३३ ॥

यथा तत्रैव—'राक्षसः—(पुरोऽवलोक्य) कथं तापसः। (प्रत्यभिज्ञाय) तत्रापि विश्वामित्रधर्मपुत्रः शुनःशेफः' इत्युपक्रम्य 'सम्प्रत्येव राक्षस(भयात्) सत्रे दीक्षिष्यमाणः स भगवान् गोप्तारं रामभद्रं वरीतुमयोध्यां गतः। राक्षसः—(सत्रासं स्वगतं) हन्त कथमेतदपि निष्पन्नम्। (प्रकाशं) भगवन्! मा कोपीः' इ(त्यन्तेन!त्यादिना) '(स्वगतं) कृतं यत् कर्तव्यम्। सम्प्रति चारसञ्चारस्यायमवसर' इत्यन्तेन विश्वामित्रानुभावकथनाद् राक्षसत्रासकथनाच्च बीजनिष्पत्तेः परिन्यासः।

अथ विलोभनं—

नायकादिगुणानां यद् वर्णनं तद् विलोभनम्।

यथा तत्रैव—'रावणः—यस्यारोपणकर्मणापि बहवो वीरव्रतं त्याजिता' इत्युपक्रम्य 'रावणः—(सप्रत्याशं) निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी' इत्यन्तेन तद्गुणवर्णनाद् विलोभनम्।

अथ युक्तिः—

सम्यक् प्रयोजनानां हि निर्णयो युक्तिरिष्यते ॥ ३४ ॥

यथा तत्रैव परशुरामरावणीयनामनि द्वितीयाङ्के—'(ततः प्रविशति भिङ्गिरिटिः। स परिक्रामन्नात्मानं निर्वर्ण्य) अये विरूप-

तापि क्वचिन्महतेऽभ्युदयाय' इत्युपक्रम्य 'भिङ्गिरिटिः—नारद! यथा समर्थयसे। तथाहि—

एकः कैलासमद्रिं करगतमकरोच्चिच्छिदे क्रौञ्चमन्यो
लङ्कामेकः कुबेरादहृत वसतये कोङ्कणानब्धितोऽन्यः।
एकः शक्रस्य जेता समिति भगवतः कार्त्तिकेयस्य चान्य-
स्तत् कामं कर्मसाम्यात् किमपरमनयोर्मध्यगा वीरलक्ष्मीः॥'

इत्यन्तेन राघवप्रतिनायकयोर्भार्गवरावणयोः कर्मसाम्यकथनाद् युक्तिः।

अथ प्राप्तिः—

प्राज्ञैः सुखस्य संप्राप्तिः प्राप्तिरित्यभिधीयते।

यथा तत्रैव—'नारदः—(युद्धावलोकनहर्ष(?) हस्तमुद्यम्य)

चित्रं नेत्ररसायनं त्रिदशतासिद्धेर्महामङ्गलं
मोक्षद्वारमपावृतं मम मनःप्रह्लादनाभेषजम्।
साकं नाकपुरन्ध्रिभिर्नवपदप्राप्त्युत्सुकाभिः सुराः!
सर्वे पश्यत रामरावणरणं वक्त्येष वो नारदः॥'

इत्यत्र नारदस्य युद्धविलोकनहर्षप्राप्तेः प्राप्तिः।

अथ समाधानं—

बीजस्य पुनराधानं समाधानमिहोच्यते॥ ३५॥

यथा तत्रैव—'भिङ्गिरिटिः—युद्धरुचे! मा निर्भरं संरम्भस्व' इत्युपक्रम्य 'अयोध्यां गत्वा परं रावणीयं योजयिष्यामी'त्यन्तेन राघवबीजस्य नारदेन पुनराधानात् समाधानम्।

अथ विधानं—

सुखदुःखकरं यत्तु तद् विधानं बुधा विदुः ।

यथा तत्रैव प्रथमाङ्के—'सीता—(ससाध्वसौत्सुक्यम्) अम्मो रक्खसो त्ति सुणिअ सच्चं सज्झसकोदूहळाणं मज्झे वट्टामि' इत्युपक्रम्य 'सीता—तादसदाणंदमिस्साणं अन्तरे उवविसिस्सं' इत्यन्तेन सीताया अदृष्टपूर्वराक्षसदर्शनेन सुखदुःखव्यतिकराख्यानाद् विधानम् ।

अथ परिभावना—

श्लाघ्यैश्चित्तचमत्कारो गुणाद्यैः परिभावना ॥ ३९ ॥

यथा तत्रैव—'रावणः—(सौत्सुक्यं विलोक्य स्वगतम्) अहो त्रिभुवनातिशायि मकरध्वजसञ्जीवनं रामणीयकमस्याः। तथाहि—इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव प्रम्लानारुणिमेव' इत्युपक्रम्य 'किं भवितेत्यन्तेन रावणस्य सीतारामणीयकदर्शनेन शतानन्दस्य रावणोत्साहदर्शनेन च द्वयोश्चित्तचमत्कारकथनात् परिभावना ।

अथोद्भेदः—

उद्घाटनं यद् बीजस्य स उद्भेदः प्रकीर्तितः ।

यथा तत्रैव द्वितीयेऽङ्के—'रावणः—त्रैयम्बकः परशुरेष निसर्गचण्ड' इत्याद्युपक्रम्य 'लीलायितं पुनरमुष्य समुद्रपानमि'त्यन्तेन गूढशङ्करधनुरधिक्षेपोद्घाटनाद् वा लोकोत्तर-

चरितसामान्यवर्णनेन तिरोहितरामचन्द्रोत्साहनोद्घाटनाद् वा उद्भेदः ।

अथ भेदः—

बीजस्योद्भेदनं भेदो यद्वा सङ्घातभेदनम् ॥ ३७ ॥

यथा तत्रैव—'रावणः—(विलोक्य) याचितपरशुना रामेण किमभिहितमासीदि'त्युपक्रम्य 'रावणः—प्रियं नः' इत्यन्तेन प्रतिनायकरूपभार्गवरावणयोरुत्तेजनाद् भेदः ।

अथ करणं—

प्रस्तुतार्थसमारम्भं करणं परिचक्षते ।

यथा तत्रैव—'(उभावपि चापारोपणं नाटयतः)' इत्युपक्रम्य आङ्कपरिसमाप्तेर्जामदग्न्यरावणयोः प्रस्तुतयुद्धार्थसमारम्भकथनात् करणम् ।

अथ प्रतिमुखसन्धिः—

बीजप्रकाशनं यत्र दृश्यादृश्यान्तरं भवेत् ॥ ३८ ॥
तत् स्यात् प्रतिमुखं बिन्दोः प्रयत्नस्यानुरोधतः ।
इह त्रयोदशाङ्गानि प्रयोज्यानि मनीषिभिः ॥ ३९ ॥
विलासपरिसर्पौ च विधुतं शमनर्मणी ।
नर्मद्युतिः प्रगमनं विरोधः पर्युपासनम् ॥ ४० ॥
पुष्पं वज्रमुपन्यासो वर्णसंहरणं तथा ।
विलासः सङ्गमार्थस्तु व्यापारः परिकीर्तितः ॥ ४१ ॥

---

१. 'नभेदनाद्' घ. पाठः.

यथा तत्रैव विलक्षलङ्केश्वरनाम्नि तृतीयेऽङ्के— 'रामः—अये इयमसौ सा सीता' इत्यारभ्य 'उन्मादहेतुरि'त्यन्तेन रामादीनां सीतालम्बनाभिलापकथनाद् विलासः ।

अथ परिसर्पः—

पूर्वोद्दिष्टस्य बीजस्य त्वङ्कच्छेदादिना तथा ।
नष्टस्यानुस्मृतिः शश्वत् परिसर्प इति स्मृतः ॥ ४२ ॥

यथा तत्रैव—'प्रतिहारः—(स्वगतं) कथमेते क्षत्रियजनसमुचिते चापारोपकर्मणि निखिलाः क्षत्रिया वितथसामर्थ्या वर्तन्ते । तदेष परमनाकलितसारो विकर्तनकुलकुमार आस्ते । यद्वा, किमनेनापि ।

यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचयः ।
करोतु तत्र किं नाम नारीनखविलेखनम् ॥

(विचिन्त्य) भवतु, तथापि सङ्कीर्तयाम्येनम् । अमुना कलितसारो ही'त्युपक्रम्य 'हेमप्रभा—सम्पण्णं पिअसहीए पाणिग्गहणं' इत्यन्तेन पूर्वं ताटकादिवधदृष्टस्य पश्चान्निखिलक्षत्रियदुरारोपधूर्जटिचापारोपणप्रभाववर्णनान्नष्टस्य रामभद्रोत्साहस्य तद्धनुर्भङ्ग(प्रिया ? प्रेक्षा)रूपेणानुसारणात् परिसर्पः ।

अथ विधुतं—

नायकादेरीप्सितानामर्थानामनवाप्तितः ।
अरतिर्या भवेत् तद्धि विद्वद्भिर्विधुतं मतम् ॥ ४३ ॥
अथवानुनयोत्कर्षे विधुतं स्यान्निराकृतिः ।

यथा तत्रैव भार्गवभङ्गनामानि चतुर्थेऽङ्के—'शतानन्दः—(सीतायाश्चिबुकमुन्नमय्य)' इत्युपक्रम्य 'जानकी'त्यन्तेन सीताया

बन्धुविरहजनितारातिकथनाद् विधुतम् । अथवा मतान्तरेण तत्रैव—'रामः—(समुपसृत्य) भगवन् ! भार्गव! प्रसीद' इत्यारभ्य 'जामदग्न्यः — नाभिवन्दनप्रसाद्यो रेणुकासूनुः' इत्यत्र रामानुनयस्य भार्गवेणास्वीकृतत्वाद् विधुतम् ।

अथ शमः—

अरतेः शमनं तज्ज्ञाः शममाहुर्मनीषिणः ॥ ४४ ॥

यथा तत्रैव—'हेमप्रभा—जुज्जइ फुळ्ळकोदूहळत्तणं परसुरामदंसणेणे'त्यारभ्य 'पुरदो रामचन्दस्स' इत्यन्तं रामचन्द्रपराक्रमकथनेन सीताया अरतिशमनाच्छमः ।

अथ नर्म—

परिहासप्रधानं यद् वचनं नर्म तद् विदुः ।

यथा तत्रैव तृतीयेऽङ्के— 'रामः — (सकण्ठानुरोधं) 'वाचा कार्मुकमस्य कौशिकपतेरारोपणायार्पितम्' इत्यत्र जनकाधिपाप[1]लापेन हासप्रधानं नर्म ।

अथ नर्मद्युतिः—

क्रोधस्यापह्नवार्थं यद्धास्यं नर्मद्युतिर्मता ॥ ४५ ॥

यथा तत्रैव चतुर्थेऽङ्के—'विश्वामित्रः—(जामदग्न्यं प्रति) रामः शिष्यो भृगुभव ! भवान् भागिनेयीसुतो मे' इत्यारभ्य 'शस्त्रग्रहणाधिकारो गुरुष्वपि तिरस्कार' इत्यन्तेन भार्गवराघवयोः पूज्यविषयक्रोधापह्नवार्थं हास्यकथनान्नर्मद्युतिः ।

---

१. 'लाभेन' ग. पाठः.

अथ प्रगमनं —

तत्तु प्रगमनं यत् स्यादुत्तरोत्तरभाषणम् ।

यथा तत्रैव — 'रामः — किं पुनरिमाः सर्वङ्कषा वाच' इत्यारभ्य 'साधु रे क्षत्रियडिम्भ! साधु' इत्यन्तेन भार्गवराघवयोरुक्तिप्रत्युक्तिकथनात् प्रगमनम् ।

अथ विरोधः —

यत्र व्यसनमायाति विरोधः स निगद्यते ॥ ४६ ॥

यथा तत्रैव — 'जामदग्न्यः —

'पक्वकर्पूरनिष्पेषमयं निरपिषत् त्रयम्'

इत्यारभ्य, 'कार्मुकव्यसनेने'त्यन्तेन जनकस्य भार्गवनिमित्तस्य जरानिमित्तस्य वा व्यसनस्य कथनाद् विरोधः ।

अथ पर्युपासनं —

रुष्टस्यानुनयो यः स्यात् पर्युपासनमीरितम् ।

यथा तत्रैव — 'विश्वामित्रः— (जामदग्न्यं प्रति) 'रामः शिष्यो भृगुसुत! भवान् भागिनेयीसुतो मे' इत्यत्र रोषान्धस्य भार्गवस्यानुनयो विश्वामित्रेण कृत इति पर्युपासनम् ।

अथ पुष्पं —

यद् विशेषाभिधानार्थं पुष्पं तदिति संज्ञितम् ॥ ४७ ॥

यथा तत्रैव तृतीयेऽङ्के —'(प्रविश्य) कोहलः —

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने'

इत्युपक्रम्य 'शरत्समय' इत्यन्तेन रामचन्द्रलक्षणार्थविशेषाभिधानात् पुष्पम् ।

अथ वज्रं —

वज्रं तदिति विज्ञेयं साक्षान्निष्ठुरभाषणम् ।

यथा तत्रैव चतुर्थेऽङ्के — 'जामदग्न्यः — किञ्च रे निदर्शितलाघव ! राघव !

'त्रुटितनिखिलनाडीचक्रवालप्रणाली-
प्रसृतरुधिरधारार्चितोच्चण्डमुण्डम् ।'

इत्यारभ्य 'आतिथ्यमनुभवितुकाम' इत्यन्तेन वज्रनिष्ठुरभाषणाद् वज्रम् ।

अथोपन्यासः —

युक्तिभिः सहितो योऽर्थ उपन्यासः स उच्यते ॥ ४८ ॥

यथा तत्रैव — 'मातलिः — अयं हि पितृभक्त्यतिशयः परशुरामस्य, यदुत रेणुकाशिरश्छेद' इत्युपक्रम्य 'यद्वा ते गुरवोऽविचिन्त्यचरितास्तेभ्योऽयमस्त्वञ्जलिः' इत्यन्तेन तत्तदुपपत्तिभिः पितुर्निदेशकरणादपि मातृवधकरणस्यैव [1]प्रतिपादनाद्वा गुरूणामविचिन्त्य[2]चरितत्वोपन्यासेन सर्वोपपन्नत्वप्रतिपादनाद्वा उपन्यासः ।

अथ वर्णसंहारः —

सर्ववर्णोपगमको वर्णसंहार उच्यते ।

---

१. 'करणाद्वा' ख. पाठः. २. 'करणत्वो' ख. पाठः.

यथा तत्रैव—'जामदग्न्यः—(कर्णं दत्त्वा आकाशे) किं ब्रूथ—केन न वर्णितं दाशरथेः शङ्करकार्मुकारोपणम्' इत्युपक्रम्य 'स्वयं गुहसहाध्यायी समन्विष्यति' इत्यन्तेन हरचापदलनविषयतया कर्तृतयानुमन्तृतया स्तोतृतया च राघवविश्वामित्रपौरादिपरामर्शेन ब्राह्मणक्षत्रियादिवर्णानां सङ्ग्रहणाद् वर्णसंहारः ।

अथ गर्भसन्धिः—

दृष्टादृष्टस्य बीजस्य गर्भस्त्वन्वेषणं मुहुः ॥ ४९ ॥
आप्राप्त्याशापताकानुरोधादङ्गानि कल्पयेत् ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ५० ॥
सङ्ग्रहश्चानुमानं च तोटकातिबले तथा ।
उद्वेगः सम्भ्रमाक्षेपौ द्वादशैषां तु लक्षणम् ॥ ५१ ॥
अभूताहरणं तत् स्याद् वाक्यं यत् कपटाश्रयम् ।

यथा तत्रैवोन्मत्तदशाननानाम्नि पञ्चमेऽङ्के—'माल्यवान्—(हसित्वा) वृद्धबुद्धिर्हि प्रथमं पश्यति चरमं कार्यम्' इत्युपक्रम्य 'जनकराजपुत्र्याः प्रतिकृतिसमर्पणेन' इत्यन्तेन माल्यवत्कपटवाक्यसंविधानादभूताहरणम् ।

अथ मार्गः—

वास्तवार्थकथा मार्गः

यथा तत्रैव निर्दोषदशरथनामनि षष्ठाङ्के—'मायामयः—आर्य! किमपि द्विषतामपि रञ्जकमुदात्तजनचरितम्' इत्युपक्रम्य 'वनभुवि चतस्रश्च दश च' इत्यन्तेन रामप्रवास-

विषयस्य मायामयदुःखस्य सत्यस्यैव कथनाद् वा मायामय-स्यैव कप(टाव?टवि)ज्ञानेऽपि रामचन्द्रेण सत्यतयाङ्गीकाराद् वा मार्गः ।

अथ रूपं—

रूपं सन्देहकृद् वचः ॥ ५२ ॥

यथा तत्रैव षष्ठाङ्के—'कैकेयी—(सोद्वेगम्) णयणपीयूस-गंडूसकरणं कुणंति' इत्युपक्रम्य 'पुरमिदं मौनव्रते वर्तते' इ-त्यन्तेन कैकेयीदशरथयोरयोध्याविषयविषादवितर्कविन्यासाद् रूपम् ।

अथोदाहरणं—

सोत्कर्षं वचनं यत्तु तदुदाहरणं मतम् ।

यथा तत्रैवासमपराक्रमनामनि सप्तमेऽङ्के— 'विभी-षणः—'सखे! सुग्रीव! अतिशशाङ्कशेखरमाचेष्टितमिदं रामस्य' इत्यारभ्य 'न हि राकामृगाङ्कमन्तरेण चन्द्रमणेरानन्दनिःष्य-न्दः' इत्यन्तेन समुद्रक्षोभकरामचन्द्रोत्साहोत्कर्षकथनादुदाहर-णम् ।

अथ क्रमः—

भावज्ञानं क्रमो यद्वा चिन्त्यमानार्थसङ्गतिः ॥ ५३ ॥

यथा तत्रैव षष्ठाङ्के —'माल्यवान् — (स्मृतिनाटितकेन) न जाने किं हि वृत्तं कैकेयीदशरथयोः । (उपसर्पितकेन) मायामयः — जयत्वार्यः । शूर्पणखा —' इत्युपक्रम्य 'तर्हि विस्तरतः कथ्यताम्' इत्यन्तेन माल्यवच्चिन्तासमकालमेव शूर्पणखामायामययोरुपागमनाद् वा, माल्यवतो विलम्बास-

हाभिप्रायवता मायामयेन निष्पन्नकार्यस्य सङ्क्षेपकथनाद् वा क्रमः।

अथ सङ्ग्रहः—

सङ्ग्रहः सामदानार्थसंयोगः परिकीर्तितः।

यथा तत्रैव सप्तमाङ्के—'समुद्रः—(साभ्यर्थनम्) 'इन्दुर्लक्ष्मीरमृतमदिरे' इत्यारभ्य 'सप्तमो वैकुण्ठावतारः' इत्यन्तेन समुद्ररामचन्द्रयोः परस्परप्रियवचनात् सङ्ग्रहः।

अथानुमानम्—

अर्थस्याभ्यूहनं लिङ्गादनुमानं प्रचक्षते॥ ५४॥

यथा तत्रैव—'प्रतीहारी—(समन्तादवलोक्य) कथमयमन्यादृश इव लक्ष्यतेऽम्बुराशिः' इत्यारभ्य 'रघुपतिविशिखाः प्रज्वलन्तः पतन्ति' इत्यन्तेन समुद्रक्षोभानुमितरामोत्साहार्थकथनादनुमानम्।

अथ तोटकं—

ससंरम्भं तु वचनं सङ्गिरन्ते हि तोटकम्।

यथा तत्रैव—'हनूमान्—यदादिशति स्वामी। (सर्वतोऽवलोक्य) युष्मद्विक्रमकेलयः' इत्युपक्रम्य आङ्कप्रकरीपरिसमाप्तेः कपिराक्षसादिसंरम्भकथनात् तोटकम्।

अथातिबलं—

बुधैरतिबलं प्रोक्तं कपटेनातिवञ्चनम्॥ ५५॥

यथा तत्रैव षष्ठाङ्के—'मायामयः—अथैकदा दयित-स्नेहमय्या कैकेय्या सममसुरानीकविजयाय' इत्युपक्रम्य 'किम-साध्यं वैदग्ध्यस्य' इत्यन्तेन मायामयशूर्पणखाभ्यां कपटवेषधा-रणेन रामवामदेववञ्चनादतिबलम्।

अथोद्वेगः—

शत्रुचोरादिसम्भूतं भयमुद्वेग उच्यते।

यथा तत्रैव—'(ततः प्रविशति गगनावतरणनाटितकेन रत्नशि-खण्डः।) स्वस्ति महाराजदशरथाय। दशरथः—अपि कुशलं वयस्यस्य जटायोः' इत्युपक्रम्य 'सुमित्रा—ण केवळं वणगअं' इत्यन्तेन शत्रुकृतभीतेरुपन्यासादुद्वेगः।

अथ सम्भ्रमः—

शत्रुव्याघ्रादिसम्भूता शङ्का स्यात् सैव सम्भ्रमः॥

यथा तत्रैव—'वामदेवः—(सास्रं स्वगतम्) 'हे मद्वाणि! निजां विमुञ्च वसातिम्' इत्युपक्रम्य 'मलयाचलनिवासिनः प्रियवयस्यस्य जटायोरपि' इत्यन्तेन कौसल्यादशरथादीनाम् ऋक्षतरक्षुह(रिहय ? यक्ष)प्रभृतिसञ्चरणाद् दारुणारण्यादिषु रामप्रवासशङ्कात्रासानुवृत्तिकथनात् सम्भ्रमः।

अथाक्षेपः—

गर्भबीजसमुत्क्षेपमाक्षेपं परिचक्षते।

यथा तत्रैव पञ्चमाङ्के—'(प्रविश्यापटाक्षेपेण छिन्ननासा कृतावकु-ण्ठना) शूर्पणखा—(साक्रन्द पादयोर्निपत्य)' इत्युपक्रम्य 'रावणः—

---

१. 'श्य' ग. पाठः.

(प्रकाशम्) शूर्पणखा' इत्यन्तेन सकलदेवतातेजस्तिरस्करणरावणातिशयवर्णनागर्भीकृतस्य रामोत्साहस्य शूर्पणखाकर्णनासानिकृन्तनरूपेण समुद्भेदादाक्षेपः ।

अथ विमर्शसन्धिः—

यत्र प्रलोभनक्रोधव्यसनाद्यैर्विमृश्यते ॥ ५७ ॥
बीजार्थो गर्भनिर्भिन्नः सोऽवमर्श इतीर्यते ।
प्रकरीनियताप्त्यानुगुण्यादत्राङ्गकल्पनम् ॥ ५८ ॥
अपवादोऽथ सम्फेटो विद्रवद्रवशक्तयः ।
द्युतिप्रसङ्गौ छलनव्यवसायौ निरोधनम् ॥ ५९ ॥
प्ररोचनाविचलनमादानं स्युस्त्रयोदश ।

तत्रापवादः—

तत्रापवादो दोषाणां प्रख्यापनमितीर्यते ॥ ६० ॥

यथा तत्रैवाष्टमाङ्के वीरविलासनामनि—'(ततः प्रविशतो राक्षसौ ।) एकः—सखे! दुर्मुख! किमपि महान् सत्त्वभ्रंशो दशकण्ठस्य' इत्युपक्रम्य 'त्रिजटा—कहं दसाणणदव्वेण ळज्जादेवीए जळञ्जळी' इत्यन्तेन रावणगतदुर्बुद्धिदोषप्रख्यापनादपवादः ।

अथ सम्फेटः—

दोषसङ्ग्रथितं वाक्यं सम्फेटं सम्प्रचक्षते ।

यथा तत्रैव—'सुमुखः—(जनान्तिकम्) सखे! दुर्मुख! किमपि शौर्यातिरेको रामानुजस्य' इत्युपक्रम्य 'रामं निहत्य

चरणौ तव वन्दिताहे' इत्यन्तेन लक्ष्मणेन्द्रजित्कुम्भकर्णानां दोषवाक्यग्रहणात् सम्फेटः ।

अथ विद्रवः—

विरोधवधदाहादिर्विद्रवः परिकीर्तितः ॥ ६१ ॥

यथा तत्रैव— (दक्षिणतः) 'सुमुखः—देव! पदातिलवः सुमुखस्तु मन्यते । लक्ष्मणे'त्युपक्रम्य '(मूर्छाविच्छेदनाटितकेन )' इत्यन्तेन कपिसेनाविक्षेपसुग्रीवनिरोधकुम्भकर्णवधेन्द्रजिद्भस्मीकरणरावणमूर्छादिसङ्कथनाद् विद्रवः ।

अथ द्रवः—

गुरुव्यतिक्रमं प्राह द्रवं तु भरतो मुनिः ।

यथा तत्रैव—'करङ्कः— धिक् शौण्डीर्यमदोद्धतं भुजवनं धिक् चन्द्रहासं च ते' इत्युपक्रम्य 'यत् कुम्भकर्णे स्थिता' इत्यत्र स्वामिनोर्दशकण्ठकुम्भकर्णयोरनुजीविना राक्षसेन निन्दाकरणाद् द्रवः ।

अथ शक्तिः—

उत्पन्नस्य विरोधस्य शमनं शक्तिरुच्यते ॥ ६२ ॥

यथा तत्रैव रावणवधनामानि नवमेऽङ्के—'पुरन्दरः— यत् कुलाचलसन्दोहनकर्मणि भगवान् कालाग्निरुद्रः' इत्युपक्रम्य 'लङ्कां रथो नीयते' इत्यन्तेन निरवशेषप्रतिमायाभूतरावणकुलोत्सादनकथनेन विरोधशमनाच्छान्तिः ।

अथ द्युतिः—

द्युतिर्नाम समुद्दिष्टा तर्जनोत्तेजने बुधैः ।

यथा तत्रैवाष्टमाङ्के—'रावणः—(ऊर्ध्वमवलोक्य) किमयमपि सत्वरः सुरसमाजः' इत्युपक्रम्य '(नेपथ्ये)' इत्यन्तेन देवतातर्जनलङ्कापुरजनोद्वेजनकथनाद् द्युतिः ।

अथ प्रसङ्गः—

प्रस्तुतार्थ[1]प्रगमनं प्रसङ्गः परिकीर्तितः ॥ ६३ ॥

प्रसङ्गं कथयन्त्यन्ये गुरूणां परिकीर्तनम् ।

यथा तत्रैव नवमाङ्के—'(प्रविश्य) यमपुरुषः—तत्रभवतो लुलायलक्ष्मणः सकलप्राणभृतां विहितनाशस्य कीनाशस्य' इत्युपक्रम्य 'इतो नीयन्तां दृष्टयः' इत्यन्तेन यमपुरन्दरादिपूज्यसङ्कीर्तनात् प्रस्तुतराक्षसवधरूपस्यार्थस्य प्रसञ्जनात् प्रसङ्गः ।

अथ छलनम्—

अवमानादिकरणं कार्यान्तं छलनं विदुः ॥ ६४ ॥

यथा तत्रैव—'चारणः—(कर्णं दत्त्वाकाशे) किमाह रामभद्रः । रे रे राक्षसीपुत्र! यद् गौरीचरणाब्जयोः प्रथमतस्त्यक्त—' इत्युपक्रम्य 'वक्रमितो निर्विशतु ते शुद्धिम्' इत्यन्तेन रामरावणाभ्यां परस्परावमानकरणाच्छलनम् ।

अथ व्यवसायः—

व्यवसायः स्वसामर्थ्यप्रख्यापनमुदीर्यते ।

---

१. 'र्थस्य शम' घ. पाठः.

यथा तत्रैव—'भो लङ्केश्वर! दीयतां जनकजा' इत्यारभ्य 'कतरो विनेयः कतरो विनेता' इत्यन्तेन रामरावणाभ्यां स्वसामर्थ्यप्रख्यापनाद् व्यवसायः ।

अथ विरोधनं —

विरोधनं निरोधोक्तिः शब्दानां च परस्परम् ॥ ६५ ॥

यथा तत्रैव —'चारणः—कथममर्षिताभ्यां रामरावणाभ्यां प्रत्युपक्रान्तमिषुवर्षाद्वैतम्' इत्युपक्रम्य 'रावणशिरो-(मण्डल)च्छेदनविद्यायाः' इत्यन्तेन संरब्धयो रामरावणयोर्दिव्यास्त्रप्रयोगरूपपरस्परसंरोधकरणाद् विरोधनम् ।

अथ प्ररोचना —

सिद्धवद् भाविनोऽर्थस्य सूचना स्यात् प्ररोचना ।

यथा तत्रैवाष्टमेऽङ्के— 'करङ्कः — (जनान्तिकम्) सखे! कङ्काल! देवकुम्भकर्णं प्रबोधय' इत्युपक्रम्य 'कङ्कालः—मन्ये विभीषणम्' इत्यन्तेन भविष्यतः कुम्भकर्णादिराक्षसनाशस्य कङ्कालकरङ्काभ्यां सिद्धवन्निश्चित्य सूचनात् प्ररोचना ।

अथ विचलनम् —

आत्मालापाद् विचलनं

यथा तत्रैव—'करङ्कः—किमाह कुम्भकर्णः । आस्तां धनुः किमधुना परतः' इत्युपक्रम्य 'तद् ध्रुवं निषेवितुं मामुपयाति पावकः' इत्यन्तेन रावणकुम्भकर्णाभ्यामात्मश्लाघा कृतेति विचलनम् ।

अथादानम्—

आदानं कार्यसङ्ग्रहः ॥ ६६ ॥

यथा नवमाङ्के—'पुरन्दरः—सखे! दशरथ! कथमयमनन्यसदृशाकारो रामभद्रपुरुषकारः। अतश्च, निर्दग्ध—' इत्युपक्रम्य 'दिनकरकुललक्ष्मीवल्लभो रामभद्रः' इत्यन्तेन निखिललोकबाधाशमनरावणवधसम्पादितधर्मादिलक्षणकार्यविशेषसङ्ग्रहणादादानम्।

अथ निर्वहणसन्धिः—

मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः।
महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥ ६७ ॥

सन्धिविरोधौ ग्रथनं निर्णयपरिभाषणे प्रसादश्च।
आनन्दसमयकृतयो भाषोपनिगूहने तद्वत् ॥ ६८ ॥

अथ पूर्वभावसयुजा उपसंहारप्रशस्ती च।
इति निर्वहणस्याङ्गान्याहुरमीषां तु लक्षणं वक्ष्ये ॥६९॥

तत्र सन्धिः—

सन्धिर्बीजोपगमः

यथा तत्रैव राघवानन्दनामनि दशमाङ्के—'(ततः प्रविशति सशोका लङ्का।) लङ्का—हा दुद्धरतवोविसेसपरितोसिद—' इत्यारभ्य, 'सशोकशङ्कुरेव' इत्यन्तेन दुष्टराक्षसशिक्षारूपरामोत्साहबीजोपगमनात् सन्धिः।

अथ विरोधः—

कार्यस्यान्वेषणं विरोधः स्यात्।

यथा तत्रैव—'(नेपथ्ये) रुद्राणि! लक्ष्मि! वरुणानि! स्वाति! द्यौः! सावित्रि! धात्रि! सकलाः कुलदेवताश्च' इत्युप-

क्रम्य 'अहो देव्वदाणं वि सीदापक्खवादो' इत्यन्तेन सीता-शुद्धिरूपकारणान्वेषणाद् विरोधः ।

अथ ग्रथनं —

ग्रथनं तदुपक्षेपः

यथा तत्रैव — 'बद्धः सेतुर्लवणजलधौ' इत्युपक्रम्य 'राज्याभिषेकसमयोचितकार्यसिद्धेः' इत्यन्तेन रामाभिषेकरूप-परमकार्योपक्षेपाद् ग्रथनम् ।

अथ निर्णयः—

स्यादनुभूतस्य निर्णयः कथनम् ॥ ७० ॥

यथा तत्रैव — 'रामः — अप्यस्मदग्रकरयन्त्रनिपीडितानाम्' इत्यत्र रामेण स्वानुभूतार्थकथनान्निर्णयः ।

अथ परिभाषणं —

परिभाषा त्वन्योन्यं जल्पनमथवा परीवादः ।

यथा तत्रैव — 'सीता — अय्यउत्त ! दसकण्ठसूअण ! वाराणसीसङ्कित्तणेण' इत्यारभ्य 'क्षत्रं क्षपितवान् मुनिः' इत्यन्तेन सीतारामविभीषणसुग्रीवाणामन्योन्यसञ्जल्पनेन वा सुग्रीवेण भार्गवपरिभावसूचनाद् वा परिभाषणम् ।

अथ प्रसादः —

शुश्रूषादिप्राप्तं प्रसादमाहुः प्रसन्नत्वम् ॥ ७१ ॥

यथा तत्रैव — 'रामः — (हस्तमुद्यम्य) हंहो पुष्पक ! वामतो व्रज' इत्यारभ्य 'परमनुगृहीतं रघुकुलम्' इत्यन्तेनागस्त्यदत्ताशीर्वादप्रसादकथनात् प्रसादः ।

अथानन्दः—

अभिलषितार्थसमागममानन्दं प्राहुराचार्याः।

यथा तत्रैव—'हंहो विमानराज! विमुच्य वसुधासमीपवर्तिनीं गतिं किञ्चिदुच्चैर्भव' इत्यारभ्य 'स च ब्रह्मलोक इति श्रूयते' इत्यन्तेन सीतादीनामभिलषितदिव्यलोकदर्शनरूपार्थसिद्धेरानन्दः।

अथ समयः—

समयो दुःखापगमः

यथा तत्रैव—'भरतः—आर्य! रावणविद्रावण! भरतोऽहमभिवादये' इत्युपक्रम्य 'भरतसुग्रीवविभीषणाः परस्परं परिष्वजन्ते' इत्यन्तेन बन्धूनामन्योन्यालोकनपरिष्वङ्गादिभिर्दुःखापगमकथनात् समयः।

अथ कृतिः—

कृतिरथ लब्धार्थसुस्थिरीकरणम्॥ ७२॥

यथा तत्रैव—'(प्रविश्य) हनुमान्—देव! मत्तः श्रुतवृत्तान्तो वासिष्ठः' इत्यारभ्य 'वाचा भगवान् वसिष्ठोऽपि ब्रूत' इत्यन्तेनागस्त्यदत्ताशीर्वादस्य वसिष्ठवचनसंवादेन स्थिरीकरणात् कृतिः।

अथ भाषणं—

बहुमानाद् [1]व्याख्या(नं) भाषणम्

---

1. 'वाक्य(?)भा' म. पाठः.

यथा तत्रैव—'वसिष्ठः—

रामो दान्तदशाननः किमपरं सीता सतीष्वग्रणीः
सौमित्रिः सदृशोऽस्तु कस्य समरे येनेन्द्रजिन्निर्जितः ।
किं ब्रूमो भरतं च रामविरहे तत्पादुकारक्षकं
शत्रुघ्नः कथितोऽग्रजस्य च गुणैर्वन्द्यं कुटुम्बं रघोः ॥'

इत्यत्र वसिष्ठेन रघुकुटुम्बस्य रामचन्द्रादिसत्पुरुषोत्पत्तिस्थानतया तल्लक्षणबहुमानप्राप्तिकथनाद् भाषणम् ।

अथोपगूहनम्—

उपगूढमद्भुतप्राप्तिः ।

यथा तत्रैव—'अलका—अहोनुखलु भोः! पतिव्रतामयं ज्योतिरनभिभवनीयं ज्योतिरन्तरैः । यतः,

प्रविशन्त्या चितावङ्कं जानक्या परिशुद्धये ।
§विभेदः कोऽपि निर्णीतः पयसः पावकस्य च ॥'

इत्युपक्रम्य, '(नेपथ्ये)

योगीन्द्रश्च नरेन्द्रश्च यस्याः स जनकः पिता ।
विशुद्धा रामगृहिणी वह्नौ दशरथस्नुषा ॥'

इत्यन्तेन सीताया निश्शङ्कज्वलनप्रवेशनिरपायनिर्गमनरूप(ाद्भुत)कथनादुपगूहनम् ।

अथ पूर्वभावः—

तदुपक्रम(ण?)कार्यस्य स्याद् दृष्टिः पूर्वभावस्तु ॥ ७३ ॥

---

§ 'भेदः कोऽपि न निर्णीतः पयसः पावकस्य वा' इति मुद्रितबालरामायणपाठः ।

यथा तत्रैव—'वत्स! रामभद्र! प्रशस्तो मुहूर्तो वर्तते। तदध्यास्स्व त्वं सिंहासनम्' इत्युपक्रम्य 'वसिष्ठः — रामभद्र! धन्योऽसि, यस्य ते भगवान् कुबेरोऽर्थी' इत्यन्तेन वसिष्ठेन रामचन्द्रस्याभिषेकाङ्गीकरणकुबेरविमानप्रत्यर्पणयोः कार्ययोः प्रदर्शनात् पूर्वभावः ।

अथोपसंहारः—

धर्मार्थाद्युपगमनादुपसंहारः कृतार्थताकथनम् ।

यथा तत्रैव — 'वसिष्ठः — वत्स! रामचन्द्र! किं ते भूयः प्रियमुपहरामि । रामः — भगवन्! किमतः परं प्रियमस्ति ।

रुग्णं चाजगवं न चातिकुपितो भर्गः सुरग्रामणीः
सेतुश्च ग्रथितः प्रसन्नमधुरो दृष्टश्च वारांनिधिः ।
पौलस्त्यश्चरमस्थितः'

इत्यन्तेन शरणागतरक्षणेन धर्मप्राप्तेः 'प्राप्तं यानमिदं च' इत्यत्र विमानलाभेनार्थप्राप्तेश्च 'न चातिकुपितो भर्गः सुरग्रामणीः' इत्यादिभिः पादान्तवाक्यैः रामचन्द्रेण स्वकृतार्थताकथनादुपसंहारः। किञ्च 'रुग्णं चाजगवं, सेतुश्च ग्रथित' इत्यादिभ्यां युद्धोत्साहविधेः 'पौलस्त्यश्चरमस्थितः' इत्यत्र विभीषणस्थापनेन दयावीरविधेः 'याचितवते दत्तं कुबेराय च' इत्यत्र दानवीरसिद्धेश्च रामचन्द्रेण स्वकृतार्थत्वकथनादुपसंहारः ।

अथ प्रशस्तिः—

भरतैश्वराचराणामाशीराशंसनं प्रशस्तिः स्यात् ॥ ७४ ॥

यथा तत्रैव — 'यथोचितमस्तु भरतवाक्यं —

सम्यक् संस्कारविद्याविशदमुपनिषद्भूतमर्थाद्भुतानां
ग्रथ्नन्तु ग्रन्थिवन्ध्यं वचनमनुपतत्सूक्तिमुद्राः कवीन्द्राः ।
सन्तः सन्तर्पितान्तःकरणमनुगुणं ब्रह्मविद्भिश्च काव्य-
श्रीमूर्तेः सात्त्विकैर्यत् कथमपिशुनितं भावयन्तोऽर्चयन्तु ॥

इत्यत्र कवीन्द्राणां निर्दोषसूक्तिग्रथनाशंसनाद् भावकानां वचनाशंसनेन च सकलव्यवहारप्रवर्तकवाङ्मयरूपजगन्मङ्गलकथनात् प्रशस्तिरिति सर्वं प्रशस्तम् ।

रसभावानुरोधेन प्रयोजनमपेक्ष्य च ।
साकल्यं कार्यमङ्गानामित्याचार्याः प्रचक्षते ॥ ७५ ॥
केषांचिदेषामङ्गानां वैकल्यं केचिदूचिरे ।
मुखादिसन्धिष्वङ्गानां क्रमोऽयं न विवक्षितः ॥ ७६ ॥
क्रमस्यानादृतत्वेन भरतादिभिरादिमैः ।
लक्ष्येषु व्युत्क्रमेणापि भरतेन (?) विचक्षणैः ॥ ७७ ॥
चतुष्षष्टिकलामर्मवेदिना शिङ्गभूभुजा ।
लक्षिता च चतुष्षष्टिर्बालरामायणे स्फुटम् ॥ ७८ ॥

अथ सन्ध्यन्तराणि —

मुखादिसन्धिष्वङ्गानामशैथिल्यं प्रतीयते ।
सन्ध्यन्तराणि योग्यानि तत्र तत्रैकविंशतिः ॥ ७९ ॥
आचार्यान्तरसङ्गत्या चमत्कारो विधीयते ।
लक्ष्यलक्षणमेतेषामुदाहृतमपि स्फुटम् ॥ ८० ॥
सामदाने भेददण्डौ प्रत्युत्पन्नमतिर्वधः ।
गोत्रस्खलितमोजश्च धीः क्रोधः साहसं भयम् ॥ ८१ ॥

---

* 'ब्रह्मणः काव्यमूर्तेस्तत्तत्त्व सात्त्विकैश्च प्रथमपिशुनित' इति मुद्रितबालरामायणपाठः ।

माया च संहृतिर्भ्रान्तिर्दूत्यं हेत्ववधारणम्।
स्वप्नलेखौ मदश्चित्रमित्येतान्येकविंशतिः ॥ ८२ ॥

तत्र साम प्रियं वाक्यं स्वानुवृत्तिप्रकाशनम् ।

यथा मालविकाग्निमित्रे — 'राजा — अये! न भेतव्यम् । मालविका—(सावष्टम्भम्) जो ण भाअदि सो मए भट्टिणीदंसणे दिट्ठसामत्थो भट्टा । राजा—

दाक्षिण्यं नाम बिम्बोष्ठि! बैम्बिकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ! ये प्राणास्त्वदधीननिबन्धनाः ॥'

इत्यत्र राज्ञो वचनं साम ।

अथ दानं —

दानमात्मप्रतिनिधिर्भूषणादिसमर्पणम् ॥ ८३ ॥

यथा मालतीमाधवे—'मालती— पिअसहि! सव्वदा सुमरिदव्वम्हि । एसा वि माहवसहत्थणिम्माणमणोहरा वउळमाळा माळदीणिव्विसेसं पिअसहीए दट्ठव्वा संपदं हिअएण धारणिज्जेत्ति। (इति स्वकण्ठादुन्मुच्य माधवस्य कण्ठे वकुलमालां विन्यस्यति। सहसापसृत्य साध्वसोत्कम्पं नाटयति ।)' अत्र मालत्या भर्तुकामायाः प्रतिनिधितया लवङ्गिकायां कुवलयमालासमर्पणं दानम् ।

अथ भेदः—

भेदस्तु कपटालापैः सुहृदां भेदकल्पना ।

यथा मालतीमाधवे— 'कामन्दकी —

राज्ञः प्रियाय सुहृदे सचिवाय कार्याद्
दत्त्वात्मजां भवतु निर्वृतिमानमात्यः ।
दुर्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव ॥

मालती — (स्वगतम्) हा ताद! तुमं पि मम णाम एवं ति सव्वहा जिदं भोअतिह्णाए ।' इत्यत्र कामन्दक्या मालतीतज्जनकयोर्भेदकल्पनं भेदः ।

अथ दण्डः —

दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्याथ तर्जनम् ॥ ८४ ॥

दृष्ट्या यथा मालतीमाधवे —'रेरे पाप!

प्रणयसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'

अत्राघोरघण्टस्याविनयदर्शनेन माधवकृततर्जनं दण्डः।

श्रुत्या यथा शाकुन्तले — 'राजा — (सहसोपसृत्य)

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥'

अत्राविनयश्रुत्या दुःषन्तेन कृतं तर्जनं दण्डः ।

अथ प्रत्युत्पन्नमतिः —

तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता ।

यथा मालविकाग्निमित्रे—'राजा—तयोर्द्वयोः किन्निमित्तो मोक्ष इति, किं देव्याः परिजनमतिक्रम्य भवान् सन्दिष्ट इत्येवमनया प्रष्टव्यम् । विदूषकः—णं पुच्छिदो ह्मि । पढमं मन्दस्स वि मे तह उत्तरं पच्चुप्पण्णं आसि । राजा—कथ्यताम् । विदूषकः—भणिदा मए दव्वचिन्तएहिं विण्णविदो राआ । सोपसग्गं वो णक्खत्तं सव्वबन्धणमोक्खो करीअदु त्ति । एदं सुणिअ देवीए इरावदीए चित्तं रक्खन्तीए राआ किळ मोएदित्ति अहं सन्दिट्ठो त्ति ताए संवादिदो अत्थो । राजा—(विदूषकं परिष्वज्य) सखे ! प्रियो भव ।' इत्यत्र विदूषकस्य समुचितोत्तरप्रातिभा प्रत्युत्पन्नमतिः ॥

अथ वधः—

वधस्तु ज्ञापि(तो?ता) द्रोहाक्रिया स्यादाततायिनः ॥८५॥

यथा वेणीसंहारे—'वासुदेवः—अहं पुनश्चार्वाकेण व्याकुलीभूतं भवन्तमुपलभ्यार्जुनेन त्वरितमागतः । युधिष्ठिरः—किं नाम चार्वाकेण वयमेवं विप्रलब्धाः । भीमः—भगवन् ! क्वासौ धार्तराष्ट्रसखश्चार्वाको नाम राक्षसः । येनार्यस्य महानयं चित्तविभ्रमः । वासुदेवः—निगृहीतो दुरात्मा कुमारनकुलेन । युधिष्ठिरः—प्रियं नः प्रियम्' इत्यत्र चार्वाकनिग्रहो वधः ।

अथ गोत्रस्खलितं—

तद् गोत्रस्खलितं यत्तु नामव्यत्ययभाषणम् ।

यथा विक्रमोर्वशीये — 'प्रथमः — अये किं सदोषावकाश इव ते वाक्यशेषः । द्वितीयः — आम ताए उव्वसीए वअणं खलिअं आसि । प्रथमः — किमिति । द्वितीयः — लच्छीभूमिआए वट्टमाणा उव्वसी वारुणीभूमिआए मेणआए पुच्छिदा । सहि! समाअदा तेल्लोक्कमल्लो सकेसवा लोअवाला । कदरस्सिं दे भावाहिणिवेसो त्ति । तदा ताए पुरुसोत्तमे त्ति भणिदव्वे पुरुरव त्ति णिग्गदा वाणी ।' इत्यत्र नामव्यतिक्रमः स्फुट एव ।

अथौजः —

ओजस्तु वागुपन्यासो निजशक्तिप्रकाशकः ॥ ८६ ॥

यथा उत्तररामे — 'कुशः — सखे! दाण्डायन!

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे! तथेति ।
अद्यास्तमेतु भुवनेषु स राजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥'

इत्यत्र ओजः स्पष्टमेव ।

अथ धीः —

इष्टार्थसिद्धिपर्यन्ता चिन्ता धीरिति कथ्यते ।

यथा मालविकायां चतुर्थेऽङ्के — 'राजा — (निःश्वस्य सपरामर्शम्) सखे! किमत्र कर्तव्यम्। विदूषकः — अत्थि एत्थ उवाओ। राजा— क इव । विदूषकः —(सदृष्टिक्षेपम्) को वि अदिट्ठो सुणिस्सदि। ता कण्णे कहेमि। (तथा करोति।) राजा — सुष्ठु प्रयुज्यतां सिद्धये' इत्यत्र विदूषकेण धारिणीहस्तमणिमुद्रिकाकर्षणहेतुभूतस्य भुजगविषवेगकपटस्य चिन्तनं धीः।

अथ क्रोधः —

क्रोधस्तु चेतसो दीप्तिरपराधादिदर्शनात् ॥ ८७ ॥

यथा रत्नावल्यां तृतीयेऽङ्के — 'वासवदत्ता — कञ्चणमालिए! एदेणव्व वणळदापासेण बन्धिअ उवणेहि णं बह्मबन्धुं। एदं वि दुव्विणीदं कण्णअं अग्गदो करेहि' इत्यत्र वासवदत्ताया रोषः क्रोधः ।

अथ साहसं—

स्वजीवितनिराकाङ्क्षो व्यापारः साहसं भवेत् ।

यथा मालतीमाधवे —

'अशस्त्रपातमव्याजं पुरुषाङ्गोपकल्पितम्
विक्रीयते महामांसं गृह्यतां गृह्यतामिति ॥'

अत्र माधवस्य महामांसविक्रयव्यापारः साहसम्।

अथ भयं—

भयं त्वाकस्मिकत्रासः

यथाभिरामराघवे द्वितीयाङ्के —

'(प्रविश्यापटाक्षेपेण सम्भ्रान्तो) वटुः—अय्य! परित्ताआहि परित्ताआहि अच्चाहिदे पडिदो ह्मि । (इत्यभिद्रवति।)' इत्यादौ वटुत्रासो भयम् ।

अथ माया—

माया कैतवकल्पना ॥ ८८ ॥

यथा रत्नावल्यां—'राजा— (आसनादवतीर्य) वयस्य!

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं
दोर्भिर्दैत्यान्तकोऽयं सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि! देवास्तथैते
नृत्यन्ति व्योम्नि चैताः स्खलचरणरणन्नूपुरा दिव्यनार्यः ॥'

इत्यत्र ऐन्द्रजालिकं माया ।

अथ संवृतिः—

संवृतिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवेत् ।

यथा शाकुन्तले—'राजा— (स्वगतम्) अतिचपलोऽयं वटुः कदाचिदिमां[1] कथामन्तःपुरेभ्यः[2] कथयेत् । भवत्वेवं तावत् ।

क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः ।
परिहासविजल्पितं सखे! परमार्थेन न गृह्यतां वचः ॥'

अत्र दुष्षन्तेन स्वयमुक्तस्य शाकुन्तलाप्रसङ्गस्य स्वयं प्रच्छादनं संवृतिः ।

अथ भ्रान्तिः—

१. 'मामस्मत्प्रार्थनाम' क. ख. पाठः  २ 'रस्य पुरत प्रकाशये' ग. घ. पाठः.

भ्रान्तिर्विपर्ययज्ञानं प्रसङ्गस्याविनिश्चयात् ॥ ८९ ॥

यथा वेणीसंहारे द्वितीयेऽङ्के — 'भानुमती — तदो तस्स अदिसअदिव्वरूविणो णउळस्स दंसणेण उस्सुआ जादा । (हद हिअआ बुत्ति आसणट्ठाणं ळदामण्डपपरिसिमु आरी ? तदो हिदहिअआ उज्झिअ तं आसण्णट्ठाणं ळदामण्डपपरिसरं पविट्ठा)। राजा — किं नामातिशायदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जातेति । तत् कथमनया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः । मूर्ख ! दुर्योधन ! कुलटाविप्रलब्धमात्मानं बहुमन्यमानः किं वक्ष्यसि । 'किं कण्ठे शिथिलीकृत' इत्यादि पठित्वा । (दिशो विलोक्य) तदर्थं च तस्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनसंकथासु बद्धः पक्षपातः। दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः।' इत्यत्र देवीस्वप्नस्यानिश्चयाद् दुर्योधनस्य विपरीतज्ञानं भ्रातिः ।

अथ दूत्यं —

दूत्यं तु सहकारित्वं दुर्घटे कार्यवस्तुनि ।

यथा मालविकायां—'विदूषकः—अळं भवदो धीरदं उज्झिअ परिदेविदेण । दिट्ठा मए माळविआए सही ।' इत्यारभ्य 'तह वि घटइस्सं त्ति' इत्यन्तम् । अत्र च वकुलावलिकया मालविकाग्निमित्रयोर्घटने सहकारित्वमङ्गीकृतामिति दूत्यम् ।

अथ हेत्ववधारणं —

निश्चयो हेतुनार्थस्य मतं हेत्ववधारणम् ॥ ९० ॥

यथा शाकुन्तले—'राजा—

स्त्रीणामशिक्षितपटुत्वममानुषीषु
सन्दृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥'

अत्र परभृतानिदर्शनोपबृंहितेन स्त्रीत्वहेतुना मृषाभाषणस्यार्थस्य निश्चयो हेत्ववधारणम् ।

अथ स्वप्नः—

स्वप्नो निद्रान्तरे मन्तुभेदकृद् वचनं मतम् ।

यथा मालविकायां—'विदूषकः—(स्वप्नायते।) भोदि ! माळविए ! । निपुणिका—सुदं भट्टिणीए । कस्स ‡एसो अप्पणिओअसंपादणे विस्ससणिज्जो हदासो । सव्वआ सोत्थिवाअणमो—' इत्यारभ्य 'इरावदिं अदिक्कमन्ती होहि ।' इत्यत्र विदूषकस्योत्स्वप्नायितं स्वप्नः ।

अथ लेखः—

विवक्षितार्थकलिता पत्रिका लेख ईरितः ॥ ९१ ॥

यथा विक्रमोर्वशीये—'राजा—(विभाव्य) सखे ! भूर्जपत्रगतोऽयमक्षरविन्यासः । विदूषकः—णं अदिट्ठाए' इत्या-

‡ 'वअस्सो अप्पणो अब्भवहारिअसंपादणापेसलो किदव्वो ह' इति मातृकासु दृश्यते ।

रभ्यं 'अयं प्रियायाः स्वहस्तलेखः' इत्यत्रोर्वशीप्रहितः पत्रिकार्थो लेखः ।

अथ मदः —

मदस्तु मद्यजः

यथा मालविकायां — '(ततः प्रविशति युक्तमदा इरावती चेटी च ।)' इत्यत्रेरावतीमदः ।

अथ चित्रं —

चित्रं त्वाकारस्य विलेखनम्

यथा शाकुन्तले — 'राजा — सखे ! अकारणपरित्यागानुशयः ।' इत्यारभ्य 'पुनरपि चित्रीकृता कान्ता' इत्यन्तेन चित्रं स्फुटम् । इति कल्याणम् ॥

उद्भावकल्पनाङ्गानां मुखप्रमुखसन्धिषु ॥ ९२ ॥
प्रत्येकं नियतत्वेन योज्या तत्रैव कल्पना ।
सन्ध्यन्तराणां विज्ञेयः प्रयोगस्त्वविभागतः ॥ ९३ ॥
तथैव दर्शनादेषामनैयत्येन सन्धिषु ।
तदेषामविचारेण कथितो दशरूपके ॥ ९४ ॥
सन्ध्यन्तराणामङ्गेषु नान्तर्भावो मतो मम ।
सामाद्युपायदक्षेण सन्ध्यादिगुणशोभिना ॥ ९५ ॥
निर्व्यूढं शिङ्गभूपेन सन्ध्यन्तरनिरूपणम् ।
एवमङ्गैरुपाङ्गैश्च सुश्लिष्टं रूपकश्रियः ॥ ९६ ॥
शरीरं वस्त्वलङ्कुर्यात् षट्त्रिंशद्भूषणैः स्फुटम् ।

भूषणाक्षरसङ्घातौ हेतुः प्राप्तिरुदाहृतिः ॥ ९७ ॥
शोभा संशयदृष्टान्तावभिप्रायो निदर्शनम् ।
सिद्धिप्रसिद्धी दाक्षिण्यमर्थापत्तिर्विशेषणम् ॥ ९८ ॥
पदोच्चयस्तुल्यतर्कौ विचारस्तद्विपर्ययः ।
गुणातिपातोऽतिशयो निरुक्तं गुणकीर्तनम् ॥ ९९ ॥
गर्हणानुनयो भ्रंशो लेखक्षोभौ मनोरथः ।
अनुक्तसिद्धिः सारूप्यं माला मधुरभाषणम् ॥ १०० ॥
पृच्छोपदिष्टदृष्टानि षट्त्रिंशद्भूषणानि हि ।
गुणालङ्कारबहुलं भाषणं भूषणं मतम् ॥ १०१ ॥

यथा रामानन्दे —

'खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं
चर्चां वर्णयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।
गन्धं मुञ्चति सिक्तलाजसुरभिर्वर्षेण सिक्ता स्थली
दुर्लक्षोऽपि विभाव्यते कमलिनीहासे च भासां पतिः ॥'

अत्र श्लेषप्रसादसमाधिसमतादीना गुणानामुपमारूपकोत्प्रेक्षाहेतूनामलङ्काराणां च सम्भवादिदं भूषणम् ।

अथाक्षरसङ्घातः —

वाक्यमक्षरसङ्घातो भिन्नार्थं श्लिष्टवर्णकम् ।

यथा शाकुन्तले — 'राजा— यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि' इत्युपक्रम्य 'कथं शकुन्तलेत्यस्य मातुराख्या' इत्यन्तम् । अत्र शकुन्तलावण्यमित्यत्र शकुन्तलानामाक्षराणां प्रतिभावनादयमक्षरसङ्घातः ।

अथ हेतुः —

स हेतुरिति निर्दिष्टो यः साध्यार्थप्रसाधकः ॥ १०२॥

यथा रत्नावल्यां — 'राजा —

स्पष्टाक्षरमिदं यत्नान्मधुरं स्त्रीस्वभावतः ।
अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति शारिका ॥'

अत्र शारिकालापसाधनाय यत्नस्पष्टाक्षरत्वादिहेतूनां कथनादयं हेतुः ।

अथ प्राप्तिः—

एकदेशपरिज्ञानात् प्राप्तिः शेषाभियोजनम् ।

यथा विक्रमोर्वशीये — 'राजा —

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥'

इत्यत्र हंसे प्रियागमनमात्रविभाव्यप्रियाहरणाभियोगः प्राप्तिः ।

अथोदाहरणं —

वाक्यं यद् गूढतुल्यार्थं तदुदाहरणं मतम् ॥ १०३ ॥

यथा शाकुन्तले — 'राजा — (स्वगतम्) कथमात्मापहारं करोमि । भवत्वेवं तावत् । (प्रकाशम्)' इत्यारभ्य 'ण वो वअणं सुणिस्सं' इत्यन्तम् । अत्र साभिप्रायगूढार्थतया तदिदमुदाहरणम् ।

अथ शोभा—

शोभा प्रभावप्राकट्यं यूनोरन्योन्यमुच्यते ।

यथा रत्नावल्यां — 'सागरिका — (राजानं दृष्ट्वा) अहो अच्चरिअं ईरिसा अवि माणुसा ळोए दिस्सन्ति । विदूषकः— भो वअस्स ! तह तक्केमि पआवइणो इमं णिम्माअ पुणो पुणो विह्मओ संवुत्तोत्ति । राजा — सखे ! ममाप्येतदेव मनसि वर्तते ।' इत्यत्र सागरिकावत्सराजयोरन्योन्यनिर्वर्णनेन रूपातिशयप्रकटनं शोभा ।

अथ संशयः —

अनिश्चयान्तं यद् वाक्यं संशयः स निगद्यते ॥ १०४ ॥

यथा मालतीमाधवे — ' मकरन्दः —

याता भवेद् भगवतीभवनं सखी सा
जीवन्त्यथैष्यति न वेत्यभिशङ्कितोऽस्मि ।
प्रायेण बान्धवसुहृत्प्रियसङ्गमादि
सौदामनीस्फुरणचञ्चलमेव सौख्यम् ॥'

इत्यत्र मालती कामन्दक्या गृहं गता वा जीवति वा न वेति संशयेन वाक्यसमाप्तेरयं संशयः ।

अथ दृष्टान्तः —

सपक्षे दर्शनं हेतोर्दृष्टान्तः साध्यसिद्धये ।

यथा शाकुन्तले — 'राजा —

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोभिभवाद्वमन्ति ॥

इत्यत्र तपोधनेषु गूढदाहात्मकतेजसः सद्भावे साध्यसाधक-

स्यान्यतेजस्तिरस्कारजनिततेजस्समुद्गाररूपस्य हेतोः सूर्यकान्तेषु दर्शितत्वाद् दृष्टान्तः ।

अथाभिप्रायः—

अभिप्रायस्त्वभूतार्थो हृद्यः साम्येन कल्पितः ॥ १०५ ॥
अभिप्रायं परे प्राहुर्ममतां हृद्यवस्तुनि ।

यथा रत्नावल्यां — 'राजा—

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥'

इत्यत्र चन्द्रसाम्येन मुखेऽमृतकल्पनादभिप्रायः । अथवा अत्रैवातिहृद्यबिम्बाधरे राज्ञो ममत्वमभिप्रायः ।

अथ निदर्शनं—

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ॥ १०६ ॥
परोपेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ।

यथा शाकुन्तले—

'मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥'

अत्र प्रतिवस्तुन्यायेन सदृशवस्तुकीर्तनं निदर्शनम् ।

अथ सिद्धिः—

अतर्कितोपपन्नः स्यात् सिद्धिरिष्टार्थसङ्गमः ॥ १०७ ॥

यथा मालविकाग्निमित्रे — 'विदूषकः — (दृष्ट्वा) ही ही सीहुपाणुव्वेजिदस्स मच्छण्डिआ उवणदा। राजा — अये किमेतत् । विदूषकः — एसा णादिपरिक्किदवेसा ऊसुअ-वअणा अदूरे वट्टइ। राजा — किं मालविका। विदूषकः — अहइं । राजा — शक्यमिदानीं जीवितमवलम्बितुम्' इत्यत्रे-रावतीसङ्केतं गच्छतो राज्ञो मालविकादर्शनासिद्धिरचिन्तिता सिद्धिः।

अथ प्रसिद्धिः —

प्रसिद्धिर्लोकविख्यातैर्वाक्यैरर्थप्रसाधनम् ।

यथा शाकुन्तले

'सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'

अत्र शैवलाद्यनुरोधेऽपि रमणीयतया प्रसिद्धानां कथनेन शकुन्तलामनोज्ञतासाधनं प्रसिद्धिः ।

अथ दाक्षिण्यं —

चिन्तानुवर्तनं यत्र तद् दाक्षिण्यमितीरितम् ॥ १०८ ॥

यथा शाकुन्तले — 'सेनापतिः — जयतु स्वामी । राजा — भद्र! सेनापते! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माढव्येन । सेनापतिः — (विदूषकं प्रति जनान्तिकम्) सखे!

स्थिरप्रतिज्ञो भव । अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये' इत्युपक्रम्य

'मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः' इत्यन्तेन सेनापते राजचित्तानुवर्तनं दाक्षिण्यम् ।

अथार्थापत्तिः—

उक्तार्थानुपपत्त्यान्यो यस्मिन्नर्थः प्रकल्प्यते ।
वाक्यमाधुर्यसंयुक्ता सार्थापत्तिरुदीरिता ॥ १०९ ॥

यथा रत्नावल्यां — 'विदूषकः — एसा खु अपुव्वा सिरी तुए समासादिदा । राजा — सत्यं,

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥'

अत्र स्वेदच्छद्मामृतद्रवोत्पत्तेरन्यथानुपपत्त्या पारिजातपल्लवकथनादियमर्थापत्तिः ।

अथ विशेषणं —

सिद्धान् बहून् प्रधानार्थानुक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तवचनं विज्ञेयं तद् विशेषणम् ॥ ११० ॥

यथा मालतीमाधवे — 'माधवः —

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥'

इत्यत्रेन्दुकलादीन्मनोमदहेतुतया प्रसिद्धानुक्त्वा तत्समानमाधुर्यायामपि मालत्यां विशेषकथनादिदं विशेषणम् ।

अथ पदोच्चयः——

बहूनां तु प्रयुक्तानां पदानां बहुभिः पदैः ।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥ १११ ॥

यथा कर्पूरमञ्जर्याम्——

* 'सह दिअहणिसाहिं दीहरा साअदण्डा
सह मणिवळएहिं बाहधारा गळन्ति ।
सुहअ! तुह विओए तीए उत्तंमिरीए
सह अ तणुळदाए दुब्बळा जीविदासा ॥'

इत्यत्र श्वासदण्डादीनां दीर्घभावादिविक्रियासु निशादिभिः सह समावेशादयं पदोच्चयः ।

अथ तुल्यतर्कः——

रूपकैरुपमाभिर्वा तुल्यार्थाभिप्रयोजितः ।
अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्क इतीरितः ॥ ११२ ॥

यथा मालतीमाधवे —— 'माधवः——

आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम पुनर्जडिमानमेत्य ।
जात्येन चन्द्रमणिनेव महीधरस्य
सम्भाव्यते द्रवमयो मनसो विकारः ॥'

---

* सह दिवसनिशाभिर्दीर्घा श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति ।
सुभग! तव वियोगे तस्या उत्ताम्यन्त्या
सह च तनुलतया दुर्बला जीविताशा ॥

इत्यत्रेन्दुचन्द्रकान्ताद्युपमयाप्रत्यक्षस्य स्नेहरूपस्य विकारस्य कथनं तुल्यतर्कः ।

अथ विचारः—

विचारस्त्वेकसाध्यस्य बहूपायोपवर्णनम् ।

यथा मालतीमाधवे— 'मकरन्दः—

या कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथलब्धबन्धुः ।
तत्सङ्गमं प्रति सखे! न हि संशयोऽस्ति
यस्मिन् विधिश्च मदनश्च कृताभियोगः ॥'

अत्र सङ्गमरूपसाध्यार्थसिद्धये परस्परानुरागसिद्धिमदनरूपाणामुपायानां सद्भावकथनाद् विचारः ॥

अथ तद्विपर्ययः—

विचारस्यान्यथाभावो विज्ञेयस्तद्विपर्ययः ॥ ११३ ॥

यथा रामानन्दे—

'व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं कपीनामपि
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिया क्वापि मे ॥'

अत्र बहूपायसामर्थ्याभावकथनाद् विचारविपर्ययः स्पष्ट एव ।

अथ गुणाभिपातः—

गुणाभिपातमन्यत्र (?) गुणाख्यानमुदाहृतम् ।

यथा वेणीसंहारे—'भीमार्जुनौ—अलमलमाशङ्कया,

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपरः पाण्डवा यस्य दासाः ।
राजा दुश्शासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥'

अत्र युधि क्षेपवाक्यत्वान्न्यस्तशस्त्रगुणाख्यानं स्पष्टमेव।

अथातिशयः—

बहून् गुणान् कीर्तयित्वा सामान्यजनसंश्रितान् ॥ ११४ ॥
विशेषः कीर्त्यते यत्र ज्ञेयः सोऽतिशयो बुधैः ।

यथा विक्रमोर्वशीये —'राजा — साधर्म्याच्च त्वयि मे भूयसी प्रीतिः । कथमिव,

मामाहुः पृथिवीभुजामधिपतिं नागाधिराजो भवा-
न्व्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां मानुभूः ॥

इत्यत्र स्वधर्मानुधर्मणि गजाधिराजे पुरूरवसा प्रियाविरहाभावकथनादतिशयः ।

अथ निरुक्तं —

निरुक्तिर्निरवद्योक्तिर्नामात्यर्थप्रसिद्धये ॥ ११५ ॥

यथा शाकुन्तले — 'प्रियंवदा —हळा! सउन्दळे! एत्थ दाव मुहुत्तअं चिट्ठ, जेण तुए समीपगदाए एसो ळदासणाहो विअ केसररुक्खओ पडिभादि । शकुन्तला — हळा!

अदोखु तुमं सि पिअंवदा'। अत्र प्रियंवदायाः प्रियभाषणादिदं नामधेयमित्युक्तिर्निरुक्तिः ।

अथ गुणकीर्तनं —

लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ।
एकोऽपि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥ ११६ ॥

यथा उत्तररामचरिते —

'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ॥

इत्यत्रामृतकौमुदीप्रभृतिनामभिः सीताशंसनं गुणकीर्तनम् ।

अथ गर्हणं —

यत्र सङ्कीर्तयन् दोषान् गुणमर्थेन दर्शयेत् ।
गुणान् वा कीर्तयन् दोषान् दर्शयेद् गर्हणं तु तत् ॥

यथा मालतीमाधवे—'लवङ्गिका — भअवदि! किसणचउद्दसीरअणिमसाणसंचाराणिव्वट्टिदविसमववसाअणिट्ठाविदपचण्डपाखण्डदोद्दण्डसाहसो साहसिओ खु एसो। अदो पिअसही उक्कंपिदा । मकरन्दः — साधु लवाङ्गिके! साधु । स्थाने खल्वनुरागोपकारयोर्गरीयसोरुपन्यासः' इत्यत्र मांसविक्रयस्य साहसस्य दोषरूपेण कथनेऽपि माधवानुरागोत्पादनं गुणतया पर्यवसितम् । इदं गुणगर्हणत्वाद् गर्हणम् । गुणसङ्कीर्तने दोषपर्यवसाने यथा मालतीमाधवे — 'मदयन्तिका — दुम्मणा-

1. 'कामन्दकी' इति मुद्रितपुस्तकपाठः.

अदि कहं इअं वामसीळा। लवङ्गिका — कहं णाम णववहू-विस्सम्भणोवाअजाणुअं अदिळडहं विअड्ढमहुरभासणं अरो-सणं अकादरं दे भादरं भत्तारं समासादिअ ण दुम्मणाइ-स्सदि मे पिअसही । मदयन्तिका — पेक्ख बुद्धरक्खिदे! विप्पदीवो उवाळम्भो' इत्यत्र प्रमुखतो गुणकीर्तनमपि ततो दोषायेति गर्हणमिदम् ।

अथानुनयः —

अभ्यर्थनापरं वाक्यं विज्ञेयोऽनुनयो बुधैः ।

यथा वेणीसंहारे — 'धृतराष्ट्रः — सञ्जय! मद्वचनाद् ब्रूहि भारद्वाजसूनुं,

स्मरति न भवान् पीतं स्तन्यं चिराय सहामुना
मम तु मृदितं बाल्ये क्षौमं त्वदङ्गविवर्तनैः ।
अनुजनिधनस्फीताच्छोकादतिप्रणयात् भयाद्
वचनविकृतिस्तस्य क्रोधो मुधा क्रियते त्वया ॥'

इत्यत्राश्वत्थामप्रार्थनमनुनयः ।

अथ भ्रंशः —

पतनं प्रकृतादर्थादन्यस्मिन् भ्रंश ईरितः ॥११८॥

यथा प्रसन्नराघवे — 'रावणः — कथय क्व तावत् कर्णान्तनिवेशनीयगुणं कन्यारत्नं कार्मुकं च । मञ्जीरकः — इदं तावत् कार्मुकं कन्या तु चरमं लोचनपथमवतरिष्यति । रावणः — (ससंरम्भम्।) धिङ् मूर्ख! रे! रे! नक्षत्रपाठकानामपि गोष्ठीमदृष्टवानसि । तेऽपि कन्यामेव प्रथमं प्रकाशयन्ति, चरमं

धनुः । मञ्जीरकः — (स्वगतम्) कथमयं वाचाटतामेव प्रकटयती'त्यत्र रावणेन धनुःकन्ययोः प्रकृतमर्थं परित्यज्य राशिलक्षणस्यार्थस्य प्रसञ्जनादयं भ्रंशः ।

अथ लेखः —

लेखः स्यादिङ्गिताकारवद्विशेषणकृद्वचः ।

यथा मालतीमाधवे —

'असौ विद्वान् धीरः शिशुरपि विनिर्गत्य भवना-
दिहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः ।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥'

इत्यत्र कामन्दक्या मालत्यनुरागज्ञाननिवेदनस्योन्मादतरलैरिति विशेषणस्य कथनाल्लेखः ।

अथ क्षोभः —

क्षोभस्त्वन्यगते हेतावन्यस्मिन् कार्यकल्पनम् ॥११९॥

यथा रत्नावल्यां 'राजा — (उपसृत्योद्बन्धनमपनीय) देवि ! किमिदं कार्यं क्रियते ।

मम कण्ठगताः प्राणाः पाशे कण्ठगते तव ।
अनर्थार्थप्रयत्नोऽयं त्यज्यतां साहसं प्रिये ! ॥'

अत्र पाशे वासवदत्ताकण्ठगते तत्कार्यभूतस्य प्राणानां कण्ठगतत्वस्य वत्सराजेन स्वस्मिन् कल्पनात् क्षोभः ।

अथ मनोरथः—

मनोरथस्तु व्याजेन विवक्षितनिवेदनम् ।

यथा शाकुन्तले—'शकुन्तला—(पदान्तर गत्वा परिवृत्य प्रकाशम्) भो ळदाघरअ! संदावहार! आमन्तेमि तुमं पुणो दंसणस्स'। अत्र लतामण्डपव्याजेन दुष्षन्तामन्त्रणं मनोरथः।

अथानुक्तसिद्धिः—

प्रस्तावेनैव शेषार्थो यत्रानुक्तोऽपि गृह्यते ॥ १२० ॥
अनुक्तसिद्धिरेषा स्यादित्याह भरतो मुनिः ।

यथा शाकुन्तले—'अनसूया—अय्य! पुरा किळ तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किं पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घकारिणी पेसिदा। राजा—अस्त्येवान्यसमाधिभीरुत्वं देवानाम्। ततस्ततः। अनसूया—तदा वसन्तोदारसमए ताए उम्मादइत्तअं रूवं दक्खिअ। (इत्यर्धोक्ते लज्जया विरमति।) राजा—भवतु परस्ताद्विभाव्यत एव।' इत्यत्रानुक्तस्यापि मेनकाविश्वामित्रसङ्गमस्य प्रतीतेरियमनुक्तसिद्धिः ॥

अथ सारूप्यं—

दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम् ॥ १२१ ॥
सादृश्यं यत्र संक्षोभात् तत् सारूप्यं निरूप्यते ।

यथा वेणीसंहारे—'(प्रविश्य गदापाणिर्भीमः) भीमः—भीरु! क्वेदानीं गम्यते। (केशेषु ग्रहीतुमिच्छति।) युधिष्ठिरः—(बलाद् भीममालिङ्ग्य)—दुरात्मन्! भीमार्जुनशत्रो! दुर्योधनहतक!

आशैशवादनुदिनं जनितापराधः
  क्षीबो बलेन भुजयोर्हतराजपुत्र ! ।
आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य
  जीवन् प्रयासि न पदात्पदमद्य पाप ! ॥

भीमः—अये कथमार्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति' इत्यत्र चार्वाकशापितदुर्योधनविजयसङ्कथनासंक्षोभेण युधिष्ठिरादीनां भीमे सुयोधनबुद्धिकथनादिदं सारूप्यम् ।

अथ माला—

ईप्सितार्थप्रसिद्ध्यर्थं कथ्यन्ते यत्र सूरिभिः ॥ १२२ ॥
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ।

यथा धनञ्जयविजये—

'गोरक्षणं समदशात्रवमानभङ्गः
  प्रीतिर्विराटनृपतेरुपकारिणी च ।
पर्याप्तमेकमपि मे समरोत्सवाय
  सर्वं पुनर्मिलितमत्र ममैव भाग्यैः ॥'

अथ मधुरभाषणं—

यत् प्रसन्नेन सारूप्यं यत्र पूजयितुं वचः ॥ १२३ ॥
स्तुतिप्रकाशनं तत्तु स्मृतं मधुरभाषणम् ।

यथा अनर्घराघवे—'दशरथः—(सप्रश्रयम्) भगवन् ! विश्वामित्र !

कच्चित्कान्तारभाजां भवति परिभवः कोऽपि शौवापदो वा
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते वा हवींषि ।
कर्तुं वा कच्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तु-
र्यत्सम्प्राप्तोऽसि किं वा रघुकुलतपसामीदृशोऽयं विवर्तः ॥

विश्वामित्रः — (विहस्य) —

जनयति त्वयि वीर दिशां पती-
नपि गृहाङ्कणमात्रकुटुम्बिनः ।
रिपुरिति श्रुतिरेव न वास्तवी
प्रतिभयोन्नतिरस्तु कुतस्तु नः ॥'

इत्यादावन्योन्यं पूजावचनं मधुरभाषणम् ।

अथ पृच्छा —

प्रश्नेनैवोत्तरं यत्तु सा पृच्छा परिकीर्तिता ॥ १२४ ॥

यथा —

'सर्वक्षितिभृतां नाथ! दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्या वनोद्देशे मया विरहिता त्वया ॥'

इत्यत्र पर्वतानां नाथ! मया विरहिता प्रिया त्वया दृष्टेति प्रश्ने राज्ञां नाथ! त्वया विरहिता मया दृष्टेत्युत्तरस्य प्रतीयमानत्वादियं पृच्छा ।

अथोपदिष्टं —

प्रतिगृह्य तु शास्त्रार्थं यद् वाक्यमभिधीयते ।
विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते ॥ १२५ ॥

यथा शाकुन्तले — 'शकुन्तला — (भयं नाटयन्ती) मअणसंन्तत्ता वि कण्णआ अत्तणो ण पहव(न्ति?दि) । राजा — अलं गुरुजनाद् भयेन । न ते विदितधर्मा हि भगवान् रोषमत्र ग्रहीष्यति । पश्य—

गान्धर्वेण विवाहेन बह्वयो राजन्यकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥'

इत्यत्र शास्त्रानुरोधेनैव प्रवृत्तत्वादिदमुपदिष्टम् ।

अथ प्रत्यक्षदृष्टं—

यथादेशं यथाकालं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा तद् दृष्टं दृष्टवन्मतम् ॥ १२६ ॥

यथा मालविकायां—'राजा — अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति ।

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमातितरां कान्तमृज्वायतार्धम् ॥

इत्यत्रेतरसमक्षं स्थितायाः संस्थानजातिवर्णनादिदं प्रत्यक्षदृष्टम् । अप्रत्यक्षदृष्टं यथा पद्मावत्यां—

'व्यत्यस्तपादकमलं वलितत्रिभङ्गी-
सौभाग्यमङ्गविरलीकृतकेशपाशम् ।

पिञ्छावतंसमुररीकृतवंशनालं
व्यामोहनं नवमुपैमि कृपाविशेषम् ॥

इत्यत्राप्रत्यक्षस्यैव गोपालसुन्दरस्य संस्थानविशेषजातिवर्णनायामपि दृष्टवदाभासनादिदमप्रत्यक्षदृष्टम् ॥

श्रीशिङ्गभूपेन कवीश्वराणां
विश्राणितानेकविभूषणेन ।
षट्त्रिंशदुक्तानि हि भूषणानि
सलक्ष्मलक्ष्याणि मुनेर्मतेन ॥ १२७ ॥

साक्षादेवोपदेशेन प्राप्तधर्मसमन्वयात् ।
अङ्गाङ्गिभावसम्पन्नसमस्तरससंश्रयात् ॥ १२८ ॥
प्रकृत्यवस्थासन्ध्यादिसम्पत्त्युपनिबन्धनात् ।
आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधाः ॥ १२९ ॥
अतिदेशबलप्राप्तनाटकाङ्गोपजीवनात् ।
अन्यानि रूपकाणि स्युर्वि(च्छ?का)रा नाटकं प्रति ॥
अतो हि लक्षणं पूर्वं नाटकस्याभिधीयते ।
दिव्येन वा मानुषेण धीरोदात्तेन संयुतम् ॥ १३० ॥
शृङ्गारवीरान्यतरप्रधानरससंश्रयम् ।
ख्यातेतिवृत्तसम्बद्धं सन्धिपञ्चकसंयुतम् ॥ १३१ ॥
प्रकृत्यवस्थासन्ध्यङ्गसन्ध्यन्तरविभूषणैः ।
पताकास्थानकैर्वृत्तितदङ्गैश्च प्रवृत्तिभिः ॥ १३२ ॥
विष्कम्भकादिसंयुक्तं नाटकं तु त्रिवर्गदम् ।

तदेतन्नाटकारम्भप्रकारो वक्ष्यते मया ॥ १३४ ॥
विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते ।
प्रधानस्य प्रबन्धस्य तथा प्रस्तावना स्मृता ॥ १३५ ॥
अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावनोच्यते ।
प्रस्तावनायास्तु मुखे नान्दी कार्या शुभावहा ॥ १३६ ॥
आशीर्नमस्क्रियावस्तुनिर्देशान्यतमा स्मृता ।
चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला ॥ १३७ ॥
अष्टाभिर्दशभिः श्रेष्ठा सेयं द्वादशभिः पदैः ।
समैर्वा विषमैर्वापि प्रयोज्येत्यपरे जगुः ॥ १३८ ॥

तत्राशीरन्विता नान्दी यथाभिरामराघवे —

'क्रियासुः कल्याणं भुजगशयनादुत्थितवतः
कटाक्षाः कारुण्यप्रणयरसवेणीलहरयः ।
हरेर्लक्ष्मीलीलाकमलदलसौभाग्यसुहृदः
सुधासाराः स्मेराः सुचरितविशेषैकसुलभाः ॥'

नमस्क्रियावती नान्दी यथोत्तररामचरिते —

'इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ।
वन्देमहि च तां वाणीममृतामात्मनः कलाम् ॥'

वस्तुनिर्देशवती नान्दी यथा प्रबोधचन्द्रोदये —

'अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं
स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् ।
प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्र-
व्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥'

अष्टपदान्विता यथा महावीरचरिते—

'अथ स्वस्थाय देवाय नित्याय हतपाप्मने ।
त्यक्तक्रमविभागाय चैतन्यज्योतिषे नमः ॥'

दशपदान्विता यथा अभिरामराघवे—'क्रियासुः कल्याणं—' इत्यादि ।

द्वादशपदान्विता यथानर्घराघवे—

'निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ।
याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥'

अत्रैव मङ्गलार्थपदप्रायत्वं चन्द्रनामाङ्कितत्वं च द्रष्टव्यम् ।

नान्द्यन्ते तु प्रविष्टेन सूत्रधारेण धीमता ।
प्रसाधनाय रङ्गस्य वृत्तिर्योज्या हि भारती ॥ १३९॥

अङ्गान्यस्याश्च चत्वारि भरतेनाबभाषिरे।
प्ररोचनामुखे चैव वीथीप्रहसने इति ॥ १४० ॥

वीथी प्रहसनं स्वस्वप्रसङ्गे वक्ष्यते स्फुटम् ।
प्ररोचना तु सा प्रोक्ता प्रकृतार्थप्रशंसया ॥ १४१ ॥

सदस्यचित्तवृत्तीनां सम्मुखीकरणं च यत् ।
प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया ॥ १४२ ॥

अचेतनौ देशकालौ कालो मधुशरन्मुखः ।

तत्र वसन्तप्रशंसया प्ररोचना यथा पद्मावत्यां—

'राजत्कोरककण्टका मधुकरीझङ्कारहुङ्कारिणी-
रालोलस्तबकस्तनीरविरला धूतप्रवालाधराः ।
आलिङ्गन्ति लतावधूरतितरामानम्रशाखाकरै-
रत्यारूढरसानुभूतिरसिकाः कान्ते वसन्तोदये ॥

शरत्प्रशंसया यथा वेणीसंहारे—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥'
देशस्तु देवताराजतीर्थस्थानादिरुच्यते ॥ १४३ ॥
तदद्य कालनाथस्य यात्रेत्यादिषु लक्ष्यताम् ।
चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः ॥ १४४ ॥
कथानाथास्तु धर्मार्थरसमोक्षोपयोगिनः ।
कवयस्तु प्रबन्धाद्यैस्ते भवेयुश्चतुर्विधाः ॥ १४५ ॥
उदात्त उद्धतः प्रौढो विनीत इति भेदतः ।
अन्तर्गूढाभिमानोक्तिरुदात्त इति गीयते ॥ १४६ ॥

यथा मालविकाग्निमित्रे—

'पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥'

अत्र 'सन्तः परीक्ष्ये'त्यनेन स्वकृतेः परीक्षणक्षमत्वकल्पितो निजगर्वः कालिदासस्योदात्तत्वम् ।

अथोद्धतः

परापवादात् स्वोत्कर्षवादी तूद्धत उच्यते ।

यथा मालतीमाधवे —

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'

'अत्र जानन्ति ते किमपी'ति परापवादाद् 'मम तु कोऽपि समानधर्मे'त्यात्मोत्कर्षवचनाच्च भवभूतेरुद्धतत्वम् ॥

अथ प्रौढः—

यथोचितन्जिोत्कर्षवादी प्रौढ इतीरितः ॥ १४७ ॥

यथा करुणाकन्दले—

'कविर्विश्वेश्वराजो जगदवधिजाग्रन्निजयशा
रसश्रेणीमर्मव्यवहरणहेवाकरसिकः ।
यदीयानां वाचां रसिकहृदयोल्लासनविधा-
वमन्दानन्दात्मा परिणमति सन्दर्भमहिमा ॥'

अत्र रसप्रौढिसन्दर्भप्रसादयोर्नाटकनिर्मा(णे ? णोचि)-तयोरेव कथनान्निजोत्कर्षं प्रकटयन्नयं कविः प्रौढ इत्युच्यते ।

युक्त्या निजोत्कर्षवादी प्रौढ इत्यपरैः स्मृतः ।

यथा ममैव—'नेदानीन्तनदीपिके'त्यादि । अत्र ज्यो-त्स्नादिदृष्टान्तमुखेन माधुर्यौजःप्रसादाख्यानां गुणानां स्वसाहित्ये रसौचित्येन (सत्त्वं) प्रतिपादयन्नयं कविः प्रौढ इत्युच्यते ॥

अथ विनीतः—

विनीतो विनयोत्कर्षात् स्वापकर्षप्रकाशकः॥ १४८॥

यथा रामानन्दे—

'गुणो न कश्चिन्मम वाङ्निबन्धे
लभ्येत यत्नेन गवेषितोऽपि।
तथाप्यमुं रामकथाप्रबन्धं
सन्तोऽनुरागेण समाद्रियन्ते॥'

इत्यत्र विनयोत्कर्षमात्मन्यारोपयन् अयं कविर्विनीत इत्युच्यते।

सभ्यास्तु विबुधैर्ज्ञेया ये दिदृक्षान्विता जनाः।
तेऽपि द्विधा प्रार्थनीयाः प्रार्थका इति च स्फुटम्॥
इदं प्रयोक्ष्ये युष्माभिरनुज्ञा दीयतामिति।
सम्प्रार्थ्याः सूत्रधारेण प्रार्थनीया इति स्मृताः॥ १५०॥
त्वया प्रयोगः क्रियतामित्युत्कण्ठितचेतसः।
ये सूत्रिणं प्रार्थयन्ते ते शक्त्या प्रार्थकाः स्मृताः॥
विस्तरादुत सङ्क्षेपात् प्रयुञ्जीत प्ररोचनाम्।

संक्षिप्ता प्ररोचना यथा रत्नावल्यां—

'श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥'

अत्र कथानायककविसभ्यनटानां चतुर्णां संक्षेपेण वर्ण-

नादियं संक्षिप्तप्ररोचना । विस्तरात्तु बालरामायणादिषु द्रष्टव्या ।

एवं प्ररोचयन् सभ्यान् सूत्री कुर्यादथामुखम् ॥१५२॥
सूत्रधारो नटीं ब्रूते स्वकार्यं प्रति युक्तितः ।
प्रस्तुताक्षेपचित्रोक्त्या यत्तदामुखमीरितम् ॥ १५३ ॥
त्रीण्यामुखाङ्गान्युच्यन्ते कथोद्घातः प्रवर्तकः ।
प्रयोगातिशयश्चेति तेषां लक्षणमुच्यते ॥ १५४ ॥
सूत्रिणो वाक्यमर्थं वा स्वेतिवृत्तसमं यथा ।
स्वीकृत्य प्रविशेत् पात्रं कथोद्घातो द्विधा मतः ॥

तत्र वाक्येन कथोद्घातो यथा रत्नावल्यां—

'द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमाभिमुखीभूतः ॥'

अत्र च वाक्येन कथोद्घातः ।

अर्थेन यथा वेणीसंहारे—

'निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु धृतराष्ट्रसुताः सभृत्याः ॥'

अत्रोत्तरार्धे सूत्रधारेण धार्तराष्ट्राणां स्वर्गस्थितिनिरुपद्रवलक्षणयोरर्थयोर्विवक्षितयोः सतोर्भीमेन 'स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः' इति निरुपद्रवलक्षणस्यैवार्थविशेषस्य ग्रहणेन प्रवेशः कृत इत्ययमर्थेन कथोद्घातः ।

अथ प्रवर्तकः—

आक्षिप्तः कालसाम्येन प्रवेशः स्यात् प्रवर्तकः ।

यथा प्रियदर्शिकायां—

'घनबन्धननिर्मुक्तः कन्याग्रहणात् तुलां प्राप्य ।
रविरधिगतस्वधामा प्रतपति किल वत्सराज इव ॥'

अत्र शरत्कालसामान्येन वत्सराजस्याक्षेपप्रवेशात् प्रवर्तकः ।

अथ प्रयोगातिशयः—

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ॥ १५६ ॥
प्रवेशसूचनं यत्र प्रयोगातिशयो हि सः ।

यथा मालविकाग्निमित्रे—

'शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम् ।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥'

अत्रायमित्युपक्षेपेणाक्षिप्तः परिजनप्रवेशः प्रयोगातिशयः । तथा च शाकुन्तले—

'तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥'

इत्यत्र एष इत्युपक्षेपेणाक्षिप्तो दुष्यन्तप्रवेशः प्रयोगातिशयः ।

प्रस्तावना स्थापनेति द्विधा स्यादिदमामुखम् ॥ १५७ ॥
विदूषकनटीपारिपार्श्विकैः सह सल्लँपन् ।

स्तोकवीथ्यादिसहितान्यामुखाङ्गानि सूत्रकृत्॥ १५८॥
योजयेद् यत्र नाट्याङ्गैरेषा प्रस्तावना स्मृता।
सर्वामुखाङ्गवीथ्यङ्गसमेतैर्वाक्यविस्तरैः॥ १५९॥

सूत्रधारो यत्र नटीविदूषकनटादिभिः।
सल्लँपन् प्रस्तुतं चार्थमाक्षिपेत् स्थापना हि सा॥ १६०॥

शृङ्गारप्रचुरे नाट्ये योग्यः स्यादामुखक्रमः।
रत्नावल्यादिके प्रायो लक्ष्यतां कोविदैरयम्॥ १६१॥

वीराद्भुतादिप्राये तु प्रायः प्रस्तावनोचिता।
अनर्घराघवाद्येषु प्रायशो वीक्ष्यतामिदम्॥ १६२॥

हास्यबीभत्सरौद्रादिप्राये तु स्थापना मता।
वीरभद्रविजृम्भादौ स प्रायेण निरीक्ष्यताम्॥ १६३॥

कथितान्यामुखाङ्गानि वीथ्यङ्गानि प्रचक्ष्महे।
आमुखेऽपि च वीथ्यां च साधारण्येन सम्मता॥

वीथ्यङ्गसंप्रथा तेषां वीथ्यामावश्यकत्वतः।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम्॥ १६५॥

वाक्केल्यतिबले गण्डमवस्यन्दितनालिके।
असत्प्रलापव्याहारौ मृदवं च त्रयोदश॥ १६६॥

तत्रोद्घात्यकमन्योन्यालापमाला द्विधा हि तत्।
गूढार्थपदपर्यायक्रमात् प्रश्नोत्तरक्रमात्॥ १६७॥

तत्र गूढार्थपदपर्यायादुद्घात्यकं यथा वीरभद्रविजृम्भ-नामनि डिमे—

'सखे! कोऽयं रौद्रः कथय महितः कोऽपि हि रसो
रसो नामायं कः स्मृतिसुरभिरास्वादमहिमा ।
समास्वादः कोऽयं क्रमगलितवेद्यान्तरमति-
र्मनोवस्था ज्ञातं ननु वदसि निद्रान्तरमिति ॥'

अत्र रौद्ररसस्वरूपविवेचनाय रसास्वादावस्थालक्षणै-र्गूढार्थपदपर्यायैर्नटसूत्रधारयोः सल्लाँपादिदमुद्धात्यकम् ॥

प्रश्नोत्तरक्रमाद् यथा तत्रैव डिमे —

'सेव्यं किं परमुत्तमस्य चरितं लोकोत्तरः कः पुमान्
श्रीशिङ्गः स तु कीदृशो वद निधिर्धर्मस्य धर्मस्तु कः ।
सत्योक्तिर्वचनं तु किं कविनुतं को नाम तादृक् कवि-
र्विश्वेशः स तु कीदृशो विजयते विश्वेषु विश्वेशवत् ॥'

अत्र गूढार्थपदपर्यायरहितप्रश्नोत्तरक्रमेण नटसूत्रधारयोः सल्लाँपात् प्रकृतकविवर्णनोपयुक्तमिदमुद्धात्यकम् ।

अथावलगितं —

द्विधावलगितं प्रोक्तमर्थावलगनात्मकम् ।
अन्यप्रसङ्गादन्यस्य संसिद्धिः प्रकृतस्य वा ॥ १६८ ॥

अन्यप्रसङ्गादन्यस्य सिद्ध्यावलगितं यथाभिरामराघवे अनपोतनायकीये —

'हन्त सारस्वतं चक्षुः कवीनां क्रान्तदर्शिनाम् ।
अतिशय्य प्रवर्तेत नियतार्थेषु वस्तुषु ॥'

अत्र सूत्रधारेण कवीनां सारस्वतं चक्षुरिति कविसामान्यवर्णनेन स्वाभिलषितकविविशेषोत्कर्षसंसाधनरूपात् प्रकृतार्थावलगनादवलगितमिदम् ॥

अन्यप्रसङ्गेन प्रकृतस्य सिद्धिर्यथानर्घराघवे—'सूत्रधारः—मारिष! स्थाने खलु भवतः कुतूहलम्। ईदृशमेवैतत्।

तत्तादृगुज्ज्वलककुत्स्थकुलप्रशस्ति-
सौरभ्यनिर्भरगभीरमनोहराणि।
वाल्मीकिवागमृतकूपनिपानलक्ष्मी-
मेतानि बिभ्रति मुरारिकवेर्वचांसि॥'

अत्राप्रकृतवाल्मीकिवर्णनप्रसङ्गेन प्रकृतमारिषकुतूहलोत्कर्ष(सन्धा? संसाध)नरूपात् प्रकृतनाट्यावलगनादिदं द्वितीयमवलगितम्।

अथ प्रपञ्चः—

प्रपञ्चस्तु मिथःस्तोत्रमसद्भूतं च हास्यकृत्।

यथा वीरभद्रविजृम्भणे—

'नाट्याचार्यस्त्वमसि सुहृदां त्वादृशानां प्रसादात्
कोऽयं गीतश्रमविधिरहो भिन्नकण्ठोऽद्य जातः।
ज्ञातं ज्ञातं परिहससि मां भाषितैर्भावगर्भै-
र्मैवं वाच्यं त्वमसि हि गुरुस्तत्र चेष्टिः प्रमाणम्॥'

अत्र नटसूत्रधारयोरयथार्थस्यान्योन्यस्तोत्रस्य हास्यायैव प्रवृत्तत्वात् प्रपञ्चः।

अथ त्रिगतं —

श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं भवेत् ॥ १६८ ॥

यथाभिरामराघवे — 'पारिपार्श्वकः —

वाणीमुरजक्वणितं श्रुतिसुभगं किं सुधामुचः स्तनितम् ।
जलदस्य किमा ज्ञातं तव मधुरगभीरवाग्विलासोऽयम् ॥'

अत्र सूत्रधारवाग्विलासे मुरजजलदध्वनिवितर्कसम्भावनात् त्रिगतम् ॥

अथ छलं —

प्रोक्तं छलं ससोत्प्रासैः प्रियाभासैर्विलोभनम् ।

यथाभिरामराघवे —

'विद्वानसौ कलावानपि रसिको बहुविधप्रयोगज्ञः ।
इति च भवन्तं विद्मो निर्व्यूढं साधु तत् त्वया सर्वम् ॥'

अत्र विपरीतलक्षणया प्रहेलिकार्थमजानतः पारिपार्श्वकस्योपालम्भनाच्छलम् ।

अथ वाक्केलिः —

साकाङ्क्षस्यैव वाक्यस्य वाक्केलिः स्यात् समाप्तितः ।

यथा महेश्वरानन्दे —

'कुलशोकहरं कुमारमेकं कुहनाभैरवपारणोन्मुखाभ्याम् ।
उपहूय कृतादरं पितृभ्यामुपरि प्रस्तुतमोन्नमश्शिवाय ॥'

अत्र वाक्ये साकाङ्क्षे विशेषांशमनुक्त्वा नमश्शिवायेति समाप्तिकथनाद् वाक्केलिः ।

अथातिबलं —

स्पर्धयान्योन्यसामर्थ्यव्यक्तिस्त्वतिबलं भवेत् ।

यथा वीरभद्रविजृम्भणे —

'मा भूच्चिन्ता तवेयं मयि सति कुशले
दुष्करः किं प्रयोगो
मालं जानासि किं त्वं किमपि न विदिता
चातुरी मे त्वया किम् ।
आस्तां स्वस्तोत्रकन्था कृतमिह कथितै-
र्भूतपूर्वैः प्रसङ्गैः
पत्न्याहं वश्यकर्मा सपदि नटविधावेष
सज्जीभवामि ॥'

अत्र नटसूत्रधारयोः परस्परस्पर्धया स्वप्रयोगसामर्थ्यप्रकाशनादतिबलम् ।

अथ गण्डं —

गण्डं प्रस्तुतसम्बन्धिभिन्नार्थं सहसोदितम् ॥ १७१ ॥

यथा वेणीसंहारे —

'निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥'

अत्र सूत्रधारेणार्थे विवक्षिते स्वर्गस्थितिलक्षणार्थसूचकरक्तप्रसाधितभुवइत्यादिश्लिष्टवाक्यस्य सहसा प्रस्तुतसम्बन्धितयाभाषितत्वाद् गण्डम् ॥

अथावस्यन्दितं —

पूर्वोक्तस्यान्यथोक्तिः स्याद् यत्रावस्यन्दितं हि तत् ।

यथा वेणीसंहारे — 'सूत्रधारः —

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

(प्रविश्य सम्भ्रान्तः) पारिपार्श्वकः — शान्तं शान्तं पापं प्रतिहतममङ्गलम् । सूत्रधारः — मा भैषीः । ननु शरत्समयवर्णना । हंसान् धार्तराष्ट्रा इति व्यपदिशामि ।'

अत्र पूर्वोक्तस्य सुयोधनादिनिपातस्य हंसपातनव्याख्यानादिदमवस्यन्दितम् ।

अथ नालिका —

प्रहेलिका निगूढार्था हास्यार्थं नालिका स्मृता ॥ १७२ ॥
अन्तर्लापा बहिर्लापेत्येषा द्वेधा समीरिता ।

तत्रान्तर्लापा यथा प्रसन्नराघवे —

'प्रत्यङ्कमङ्कुरितसर्वरसावतार-
न्नव्योल्लसत्कुसुमराजिविराजिबन्धम् ।
घर्मेतरांशुमिव वक्रतयाभिरम्यं
नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥'

अत्र प्रसन्नराघवनामेत्युत्तरस्य सप्ताक्षराष्टपङ्क्तिक्रमेण लिखितेऽस्मिन्नेव श्लोके मृग्यत्वादन्तर्लापा नामेयम् ।

बहिर्लापा यथा बालरामायणे —

*'कमवड्ढन्तविलासं रसाअळे कं करेइ कन्दप्पो।

सूत्रधारः— अये प्रश्नोत्तरं, सेयमस्मत्प्रीतिरिति देवादेशः। तत् स्वयमेव वाचयामि ।

निर्भरगुरुर्व्यधत्त च वाल्मीकिकथां किमनुसृत्य ॥'

इत्यत्र बालरामायणमित्युत्तरस्य बहिरेव मृग्यत्वाद् बहिर्लापा नाम नालिकेयम् ॥

अथासत्प्रलापः —

असम्बद्धकथालापोऽसत्प्रलाप इतीरितः ॥ १७३ ॥

यथा वीरभद्रविजृम्भणे — 'नटः —

पत्नी परिलम्बिकुचा तनया मम दन्तुरापि तरुणवयाः।
क्रीडाकविरस्ति गृहे तदहं नाट्यप्रयोगमर्मज्ञः ॥'

अत्र नटेन स्वकीयनाट्यप्रयोगमर्मज्ञत्वे हेतुतया कथितानां क्रीडाकविसद्भावादीनामसम्बद्धत्वादयमसत्प्रलापः ॥

अथ व्याहारः—

अन्यार्थं वचनं हास्यकरं व्याहार उच्यते ।

यथानन्दकोशनामनि प्रहसने — '(प्रविश्य) नटी — अय्य! को णिओओ। सूत्रधारः — आर्ये! गर्गरिके! नूनमानन्दकोशसन्दर्शनाभिलाषिणी परिषदियम्। नटी — ता दंसेदु अय्यो, तदो किं विळम्बेण। सूत्रधारः— अयि गायिके! गर्गरिके! भवत्या मुखव्यापारेण बीजोत्थापनानुसन्धायिना भवित-

* क्रमवर्धमानविलास रसातले कि करोति कन्दर्पः।

व्यम्। नटी — (सहर्षम्) कीरिसो सो मुहवावारो। सूत्रधारः— नन्वमुमेव शिशिरमधिकृत्य ध्रुवा गानरूपा' इत्यत्रानन्दकोशबीजोत्थापनध्रुवागानार्थानामप्यन्यार्थप्रतीत्या हास्यकरत्वादयं व्याहारः ।

अथ मृदवं—

दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ॥ १७४ ॥

यथा —

'नार्हाः केवलवेदपाठविधिना कीरा इवच्छान्दसाः
शास्त्रीयाभ्यसनाच्छुनामिव नृणामन्योन्यकोलाहलः ।
व्यर्थं काव्यमसत्यवस्तुघटनात् स्वप्नेन्द्रजालादिवद्
व्याकीर्णव्यवहारनिर्णयकृते त्वेकैव कार्या स्मृतिः ॥'

अत्र कार्यादिषु गुणरूपेष्वपि दोषत्वकथनान्मृदवमिदम् ॥

एवमामुखमायोज्य सूत्रधारे सहानुगे ।
निष्क्रान्तेऽथ तदाक्षिप्तैः पात्रैर्वस्तु प्रपञ्चयेत् ॥ १७५ ॥
वस्तु सर्वं द्विधा सूच्यमसूच्यमिति भेदतः ।
रसहीनं भवेद् यत्तु वस्तु तत् सूच्यमुच्यते ॥ १७६ ॥
यद्वस्तु नीरसं तत्तु सूचयेत् सूचकास्त्वमी ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकाः ॥ १७७ ॥
तत्र विष्कम्भको भूतभाविवस्त्वंशसूचकः ।
अमुख्यपात्ररचितः संक्षेपप्रतियोजितः ॥ १७८ ॥

स शुद्धो मिश्र इत्युक्तो मिश्रः स्यान्नीचमध्यमैः ।
सोऽयं चेटीनटाचार्यसल्लाँपपरिकल्पितः ॥ १७९ ॥
मालविकाग्निमित्रस्य प्रथमाङ्के निरूप्यताम् ।
शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा ॥ १८० ॥
रत्नावल्यामेकशुद्धः प्राप्तयौगन्धरायणः ।
अनेकशुद्धो विष्कम्भः षष्ठाङ्केऽनर्घराघवे ॥ १८१ ॥
निरूप्यतां सम्प्रयुक्तो माल्यवच्छुकसारणैः ।

अथ चूलिका—

वन्दिमागधसूताद्यैः प्रत्याशीरन्तरास्थितैः ॥ १८२ ॥
अर्थोपक्षेपणं यत्तु क्रियते सा हि चूलिका ।
सा द्विधा चूलिका खण्डचूलिका चेति भेदतः ॥ १८३ ॥
पात्रैर्यवनिकान्तःस्थैः केवलं या तु निर्मिता ।
आदावङ्कस्य मध्ये वा चूलिका नाम सा स्मृता ॥ १८४ ॥
प्रवेशनिर्गमाभावादियमङ्काद् बहिर्गता ।

अङ्कादौ चूलिका यथानर्घराघवे सप्तमाङ्के—

'तमिस्रामूर्छालत्रिजगदगदङ्कारकिरणे
रघूणां गोत्रस्य प्रसवितरि देवे सवितरि ।
पुरस्स्थे दिक्पालैः सह परगृहावासवचनात्
प्रविष्टा वैदेही दहनमथ शुद्धा च निरगात् ॥'

इत्यादौ नेपथ्यगतैरेव पात्रैः सीताज्वलनप्रवेशनिर्गमादीनामर्थानां प्रयोगानुचितानां सूचनादियं चूलिका ।

अङ्कमध्ये*यथा रत्नावल्यां द्वितीयाङ्के—

'कण्ठे कृत्तावशेषं कनकमयमधः शृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः ।
दत्ताशङ्कोऽङ्गनानामनुसृतसरणिः सम्भ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥'

इत्यादि । अत्र नेपथ्यगतैः पात्रैः प्रयोगानुचितस्य वानरविप्लवाद्यर्थस्य सूचनादियं मध्यचूलिका ॥

अथ खण्डचूलिका—

रङ्गनेपथ्यसंस्थायिपात्रसँल्लापविस्तरैः ॥ १८५ ॥
आदौ केवलमङ्कस्य कल्पिता खण्डचूलिका ।
प्रवेशनिर्गमाप्राप्तेरियमङ्काद् बहिर्गता ॥ १८६ ॥

यथा बालरामायणे सप्तमाङ्कस्यादौ—

(ततः प्रविशति वैतालिकः)

(वैतालिकः)—भद्र! चन्दनचण्ड! परित्यज निद्रामुद्रा, विमुञ्च निजोटजाभ्यन्तरम् । (नेपथ्ये) अय्य! कप्पूरचण्ड! एसा मिट्ठा पभादणिद्दा, सुविस्सं[2] दाव । कर्पूरचण्डः—अहो! उत्साहशक्तिर्भवतोऽमन्त्रशीलो महीपतिरपरप्रबन्धदर्शी कविरपाठरुचिश्च वन्दी[3] न चिरं नन्दति । (नेपथ्ये) ता एत्थ संत्थरत्थिदो णिमीळिदणअणो जेव्व सुप्पभादं पठिस्सं । कर्पूरचण्डः—एतदपि भवतो भूरि । तदुपश्लोकयावो रामभद्रम् । (किञ्चिदुच्चैः)

१. 'लाचरणर' ख ग. घ पाठः  २. 'स्सदो सुविस्सदो । क' ख. घ. पाठः.
३. 'न्दी चिर नाभिनन्द' ख. ग. पाठः.

MM

मार्ताण्डैककुलप्रकाण्डतिलकस्त्रैलोक्यरक्षामणि-
विश्वामित्रमहामुनेर्निरुपधिः शिष्यो रघुग्रामणीः ।
रामस्ताडिततटाकः किमपरं प्रत्यक्षनारायणः
कौसल्यानयनोत्सवो विजयतां भूकश्यपस्यात्मजः ॥

(नेपथ्ये)

‡ कन्दप्पुद्दामदप्पप्पसमणगुरुणो बह्मणो काळदण्डे
पाणिं देन्तस्स गङ्गातरळिदससिणो पव्वईवळ्ळहस्स ।
चावं चण्डाहिसिञ्जारवहरिदणहं कर्षणारुद्धमज्झं
जं भग्गं तस्स सद्दो णिसुणिति हुअणे वित्थरन्तो ण माइ ॥'

अत्र प्रविष्टेन कर्पूरचण्डेन यवनिकान्तर्गतेन चन्दन-चण्डेन च पर्यायप्रवृत्तवाग्विलासैस्ताटकावधादिविभीषणा-भयप्रदानान्तस्य रामभद्रचरितस्य बाहुल्यात् प्रयोगानु(गे?-चि)तस्य सूचनादियं खण्डचूलिका ॥

एनां विष्कम्भमेवान्ये प्राहुर्नैतन्मतं मम ।
अप्रविष्टस्य सँल्लापो विष्कम्भे नहि युज्यते ॥ १८७ ॥

तद्विष्कम्भशिरस्कत्वान्मतेयं खण्डचूलिका ।

अथाङ्कास्यं—

पूर्वाङ्कान्ते सम्प्रविष्टैः पात्रैर्भाव्यङ्कवस्तुनः ॥ १८८ ॥

---

१. 'का' घ पाठः. २ 'कृ' ख. ग घ पाठ.

---

‡ कन्दर्पोद्दामदर्पप्रशमनगुरोर्ब्रह्मण कालदण्डे
पाणिं दातुर्गङ्गातरलितशशिन. पार्वतीवल्लभस्य ।
चापं चण्डाहिशिञ्जारवभरितनभ. कर्षणारुद्धमध्य
यद् भग्नं तस्य शब्दो निश्रूयते भुवने विस्तरन् न माति ॥

सूचनं तदविच्छित्त्यै यत् तदङ्कास्यमीरितम् ।
यथा हि वीरचरिते द्वितीयाङ्कावसानके ॥ १८९ ॥
प्रविष्टेन सुमन्त्रेण सूचितं रामविग्रहे ।
वसिष्ठविश्वामित्रादिसमाभाषणलक्षणम् ॥ १९० ॥
वस्तूत्तराङ्के पूर्वार्थाविच्छेदेनैव कल्पितम् ।

अथाङ्कावतारः—

अङ्कावतारः पात्राणां पूर्वकार्यानुवर्तिनाम् ॥ १९१ ॥
अविभागेन सर्वेषां भाविन्यङ्के प्रवेशनम् ।
द्वितीयाङ्के मालविकाग्निमित्रे स निरूप्यताम् ॥ १९२ ॥
पात्रेणाङ्कप्रविष्टेन केवलं सूचितत्वतः ।
भवेदङ्कादबाह्यत्वमङ्कास्याङ्कावतारयोः ॥ १९३ ॥

अथ प्रवेशकः—

यन्नीचैः केवलं पात्रैर्भाविभू(पा?ता)र्थसूचनम् ।
अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः ॥ १९४ ॥
सोऽयं चेटीद्वयालापसंविधानोपकल्पितः ।
मालतीमाधवे प्राज्ञैर्द्वितीयाङ्के निरूप्यताम् ॥ १९५ ॥
असूच्यं तु शुभोदात्तरसभावनिरन्तरम्
प्रारम्भे यद्यसूच्यं स्यादङ्कमेवात्र कल्पयेत् ॥ १९६ ॥
रसालङ्कारवस्तूनामुपलालनकाङ्क्षिणाम् ।
जनकाङ्कवदाधारभूतत्वादङ्क उच्यते ॥ १९७ ॥
अङ्कस्तु पञ्चषैर्द्वित्रैरङ्कतोऽङ्गस्य वस्तुनः ।
रसस्य वासनालम्बभूतैः पात्रैर्मनोहरः ॥ १९८ ॥

संविधानविशेषः स्यात् तत्रासूच्यं प्रपञ्चयेत् ।
असूच्यं तद् द्विधा दृश्यं श्राव्यं चाद्यं तु दर्शयेत् ॥ १९९ ॥

द्वेधा द्वितीयं स्वगतं प्रकाशं चेति भेदतः ।
स्वगतं स्वैकविज्ञेयं प्रकाशं तु द्विधा भवेत् ॥ २०० ॥

सर्वप्रकाशं नियतप्रकाशं चेति भेदतः ।
सर्वप्रकाशं सर्वेषां स्थितानां श्रवणोचितम् ॥ २०१ ॥

द्विधा विभाव्यते (त[1]न्य)च्च जनान्तमपवारितम् ।
त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम् ॥ २०२ ॥

अन्येनामन्त्रणं यत् स्यात् तज्जनान्तिकमुच्यते ।
रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम् ॥ २०३ ॥

इदं श्राव्यं च दृश्यं च प्रविश्य सुसमाहितैः ।
पात्रैर्निष्क्रमणं कार्यमङ्कान्ते सममेव हि ॥ २०४ ॥

अङ्कच्छेदश्च कर्तव्यः कालावस्थानुरोधतः ।
दिनार्धदिनयोर्योग्यमङ्के वस्तु प्रवर्तयेत् ॥ २०५ ॥

अङ्कप्रसङ्गाद् गर्भाङ्कलक्षणं वक्ष्यते मया ।
रसनायकवस्तूनां महोत्कर्षाय कोविदैः ॥ २०६ ॥

अङ्कस्य मध्ये योऽङ्कः स्यादयं गर्भाङ्क ईरितः ।
वस्तुसूचकनान्दीको दिङ्मात्रामुखसङ्गतः ॥ २०७ ॥

अर्थोपक्षेपकैर्हीनं चूलिकापरिवर्जितैः ।
अन्वेष्यवस्तुविषयः पात्रैस्त्रिचतुरैर्युतः ॥ २०८ ॥

नातिप्रपञ्चेतिवृत्तस्वाधाराङ्कान्तशोभितः ।
प्रस्तुतार्थानुबन्धी च पात्रनिष्क्रमणावधिः ॥ २०९ ॥

---

१. 'दि' ग. पाठः.

प्रथमाङ्के न कर्तव्यः सोऽयं काव्यविशारदैः ।
सोऽयमुत्तररामे तु रसोत्कर्षाय कथ्यताम् ॥ २१० ॥
नेतुरुत्कर्षको ज्ञेयो बालरामायणे त्वयम् ।
अमोघराघवे सोऽयं वस्तूत्कर्षैककारणम् ॥ २११ ॥
नाटकेऽङ्का न कर्तव्याः पञ्चन्यूना दशाधिकाः ।
तदीदृशगुणोपेतं नाटकं भुक्तिमुक्तिदम् ॥ २१२ ॥

तथाच भरतः—

'धर्मार्थसाधनं नाट्यं सर्वदुःखापनोदकृत् ।
आसेवध्वं तदृषयस्तस्योत्थानं तु नाटकम् ॥'

इति ।

नाटकस्य तु पूर्णादिभेदाः केचन कल्पिताः ।
तेषां नातीव रम्यत्वादपरीक्षाक्षमत्वतः ॥ २१३ ॥
मुनिनानादृतत्वाच्च तानुद्देष्टुमुदास्महे ।

अथ प्रकरणं—

यत्रेतिवृत्तमुत्पाद्यं धीरशान्तश्च नायकः ॥ २१४ ॥
रसः प्रधानः शृङ्गारः शेषं नाटकवद् भवेत् ।
तत्तु प्रकरणं शुद्धं धूर्तं मिश्रं च तत् त्रिधा ॥ २१५ ॥
कुलस्त्रीनायिकं शुद्धं मालतीमाधवादिकम् ।
गणिकानायिकं धूर्तं कामदत्ताह्वयादिकम् ॥ २१६ ॥
कितवद्यूतकारादिव्यापारं त्वत्र कल्पयेत् ।
मिश्रं तत् कुलजा(वन्ये?वेश्ये) कल्पिते यत्र नायिके ॥
धूर्तशुद्धक्रमोपेतं तन्मृच्छकटिकादिकम् ।
नाटिका त्वनयोर्भेदो न पृथग् रूपकं भवेत् ॥ २१८ ॥

१. 'जान्येकक' ग. पाठ

प्रख्यातं नृपतेर्वृत्तं नाटकादाहृतं यतः ।
बुद्धिकल्पितवस्तुत्वं तथा प्रकरणादपि ॥ २१९ ॥
विमर्शसन्धिराहित्यं भेदकं चेन्न तन्मतम् ।
रत्नावल्यादिके लक्ष्ये तत्सन्धेरपि दर्शनात् ॥ २२० ॥
स्त्रीप्रायचतुरङ्कादिभेदकं चेन्न तन्मतम् ।
एकद्वित्र्यङ्कपात्रादिभेदेनानन्तता यतः ॥ २२१ ॥
देवीवशात् सङ्गमेन भेदश्चेत् तन्न युज्यते ।
मालविकाग्निमित्रादौ नाटिकात्वप्रसङ्गतः ॥ २२२ ॥
प्रकरणिकानाटिकयोरनुसरणीया हि नाटिकासरणिः ।
अत एव भरतमुनिना नाट्यं दशधा निरूपितं पूर्वम् ॥

अथाङ्कः—

ख्यातेन वा कल्पितेन वस्तुना प्राकृतैर्नरैः ।
अन्वितैः कैशिकीहीनः सात्त्वत्यारभटीमृदुः ॥ २२४ ॥
स्त्रीणां विलापव्यापारैरुपेतः करुणाश्रयः ।
नानासङ्ग्रामसन्नाहप्रहारमरणोत्कटः ॥ २२५ ॥
मुखनिर्वाहवान् यः स्यादेकद्वित्र्यङ्क इच्छया ।
उत्सृष्टिकाङ्कः स ज्ञेयः सविष्कम्भप्रवेशनः ॥
अस्मिन्नमङ्गलप्राये कुर्यान्मङ्गलमन्ततः ।
प्रयोज्यस्य वधः कार्यः पुनरुज्जीवनावधिः ॥ २२७ ॥
उज्जीवनादप्यधिकं मनोहरफलोऽपि वा ।
विज्ञेयमस्य लक्ष्यं तु करुणाकन्दलादिकम् ॥ २२८ ॥

अथ व्यायोगः—

१. 'ट' ग. घ. पाठ. २. 'का' घ. पाठ.

ख्यातेतिवृत्तसम्पन्नो निरसहायकनायकः ।
युक्तो दशावरैः ख्यातैरुद्धतैः प्रतिनायकैः ॥ २२९ ॥
विमर्शगर्भरहितो भारत्यारभटीस्फुटः ।
हास्य[1]शृङ्गाररहित एकाङ्को रौद्रसंश्रयः ॥ २३० ॥
एकवासरवृत्तान्तः प्राप्तविष्कम्भचूलिकः ।
अस्त्रीनिमित्तसमरो व्यायोगः कथितो बुधैः ॥ २३१ ॥
विज्ञेयमस्य लक्ष्यं तु धनञ्जयजयादिकम् ।

अथ भाणः—

स्वस्य वान्यस्य वा वृत्तं विटेन निपुणोक्तिना ॥ २३२ ॥
शौर्यसौभाग्यसंस्तुत्या वीरशृङ्गारसूचकम् ।
बुद्धिकल्पितमेकाङ्कं मुखनिर्वहणान्वितम् ॥ २३३ ॥
वर्ण्यते भारतीवृत्त्या यत्र तं भाणमीरते ।
एकपात्रप्रयोज्येऽस्मिन् कुर्यादाकाशभाषितम् ॥ २३४ ॥
अन्येनानुक्तमप्यन्यो वचः श्रुत्वे(ह?व) यद् वदेत् ।
इति किं भणसीत्येतद् भवेदाकाशभाषितम् ॥२३५॥
लास्याङ्गानि दशैतस्मिन् संयोज्यान्यत्र तानि तु ।
गेयपदं स्थितपाठ्यमासीनं पुष्पगन्धिका ॥ २३६ ॥
प्रच्छेदकस्त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ।
उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ॥ २३७ ॥

अथ गेयपदं—

वीणादिवादनेनैव सहितं यत्र भाव्यते ।
ललितं नायिकागीतं तद् गेयपदमुच्यते ॥ २३८ ॥

---

१. 'स' ग. पाठ .

चञ्चत्पुटादिना वाक्याभिनयो नायिकाकृतः।
भूमिचारीप्रचारेण स्थितपाठ्यं तदुच्यते ॥ २३९ ॥
भ्रूनेत्रपाणिचरणविलासाभिनयादिकम्।
योज्यमासीनया पाठ्यमासीनं तदुदाहृतम् ॥ २४० ॥
नानाविधेन वाद्येन नानाताललयान्वितम्।
लास्यं प्रयुज्यते यत्र सा ज्ञेया पुष्पगन्धिका ॥ २४१ ॥
अन्यासङ्गमशङ्किन्या नायकस्यातिरोषया।
प्रेमच्छेदप्रकटनं लास्यं प्रच्छेदकं विदुः ॥ २४२ ॥
अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलङ्कृतम्।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥ २४३ ॥
देशभाषाविशेषेण चलद्वलयशृङ्खलम्।
लास्यं प्रयुज्यते यत्र तत् सैन्धवमिति स्मृतम् ॥ २४४ ॥
चारीभिर्ललिताभिश्च चित्रार्थाभिनयान्वितम्।
स्पष्टभावरसोपेतं लास्यं यत्तद् द्विमूढकम् ॥ २४५ ॥
अपरिज्ञातपार्श्वस्थं गेयभावविभूषितम्।
लास्यं सोत्कण्ठवाक्यं तदुत्तमोत्तमकं भवेत् ॥ २४६ ॥
कोपप्रसादजनितं साधिक्षेपपदाश्रयम्।
वाक्यं तदुक्तप्रत्युक्तं यूनोः प्रश्नोत्तरात्मकम् ॥ २४७ ॥
शृङ्गारमञ्जरी मुख्यमस्योदाहरणं मतम्।
लास्याङ्गदशकं तत्र लक्ष्यं लक्ष्यविचक्षणैः ॥ २४८ ॥

**अथ समवकारः—**

प्रख्यातेनेतिवृत्तेन नायकैरपि तद्विधैः।
पृथक्प्रयोजनासक्तैर्मिलितैर्देवदानवैः ॥ २४९ ॥

युक्तं द्वादशभिर्वीरप्रधानं कैशिकीमृदु ।
त्र्यङ्कं विमर्शहीनं च कपटत्रयसंयुतम् ॥ २५० ॥
त्रिविद्रवं त्रिशृङ्गारं विद्यात् समवकारकम् ।
मोहात्मको भ्रमः प्रोक्तः कपटस्त्रिविधस्त्वयम् ॥ २५१ ॥
सत्त्वजः शत्रुजो दैवजनितश्चेति सत्त्वजः ।
क्रूरप्राणिसमुत्पन्नः शत्रुजस्तु रणादिजः ॥ २५२ ॥
वात्यावर्षादिसम्भूतो दैवजः कपटः स्मृतः ।
उदाहरणमेतेषामावेगे लक्ष्यतां बुधैः ॥ २५३ ॥
जीवग्राहोऽथ मोहो वा कपटाद् विद्रवः स्मृतः ।
कपटत्रयसम्भूतेरयं च त्रिविधो मतः ॥ २५४ ॥
धर्मार्थकामसम्बद्धस्त्रिधा शृङ्गार ईरितः ।
वृषादिजनितः कामो धर्मशृङ्गार ईरितः ॥ २५५ ॥
पार्वतीशिवसम्भोगस्तदुदाहरणं मतम् ।
यत्र कामेन सम्बद्धैरथैरर्थानुबन्धिभिः ॥ २५६ ॥
भुज्यमानैः सुखप्राप्तिरर्थशृङ्गार ईरितः ।
सार्वभौमफलप्राप्तिहेतुना वत्सभूपतेः ॥ २५७ ॥
रत्नावल्या समं भोगो विज्ञेया तदुदाहृतिः ।
दुरोदरसुरापानपरदारादिकेलिजः ॥ २५८ ॥
तत्तदास्वादललितः कामशृङ्गार ईरितः ।
तदुदाहरणं प्रायो दृश्यं प्रहसनादिषु ॥ २५९ ॥

---

१. 'सत्त्वादि' ग, 'क्रत्वादि' घ. पाठः.

शृङ्गारत्रितयं यत्र नात्र बिन्दुप्रवेशकौ ।
मुखप्रतिमुखे सन्धी वस्तु द्वादशनाडिकम् ॥ २६० ॥
प्रथमे कल्पयेदङ्के नाडिका घटिकाद्वयम् ।
मुखादिसन्धित्रयवांश्चतुर्नाडिकवस्तुकः ॥ २६१ ॥
द्वितीयाङ्कस्तृतीयस्तु द्विनाडिककथाश्रयः ।
निर्विमर्शचतुस्सन्धिरेवमङ्कास्त्रयः स्मृताः ॥ २६२ ॥
वीथीप्रहसनाङ्गानि कुर्यादत्र समासतः ।
प्रस्तावनायाः प्रस्तावे प्रोक्तो वीथ्यङ्गविस्तरः ॥ २६३ ॥
दश प्रहसनाङ्गानि तत्प्रसङ्गे प्रचक्ष्महे ।
उदाहरणमेतस्य पयोधिमथनादिकम् ॥ २६४ ॥

अथ वीथी—

सूच्यप्रधानशृङ्गारा मुखनिर्वहणान्विता ।
एकयोज्या द्वियोज्या वा कैशिकीवृत्तिनिर्भरा ॥ २६५ ॥
वीथ्यङ्गसहितैकाङ्का वीथीति कथिता बुधैः ।
अस्यां प्रायेण लास्याङ्गदशकं योजयेन्न वा ॥ २६६ ॥
सामान्या परकीया वा नायिकात्रानुरागिणी ।
वीथ्यङ्गप्रायवस्तुत्वान्नोचिता कुलपालिका ॥ २६७ ॥
लक्ष्यमस्यास्तु विज्ञेयं माधवीवीथिकादिकम् ।

अथ प्रहसनं—

वस्तुसन्ध्यङ्कलास्याङ्गवृत्तयो यत्र भाणवत् ॥ २६८ ॥
रसो हास्यप्रधानः स्यादेतत् प्रहसनं स्मृतम् ।
विशेषेण दशाङ्गानि कल्पयेदत्र तानि तु ॥ २६९ ॥

अवलगितमवस्कन्दो व्यवहारो विप्रलम्भमुपपत्तिः।
भयमनृतं विभ्रान्तिर्गद्गदवाक् च प्रलापश्च ॥ २७०॥

तत्रावलगितं—

पूर्वमात्मगृहीतस्य समाचारस्य मोहतः।
दूषणं त्यजनं चात्र द्विधावलगितं मतम् ॥ २७१ ॥

यथानन्दकोशनामनि प्रहसने—

'यानि घ्नन्ति गलादधः सुकृतिनो लोम्नां च तेषां स्थितिं
यान्यूर्ध्वं परिपोषयन्ति पुरुषास्तेषां मुहुः खण्डनम्।
कृत्वा सर्वजगद्विरुद्धविधिना सञ्चारिणां मादृशां
श्रीगीता च हरीतकी च हरतो हन्तोपभोग्यं वयः ॥'

अत्र केनापि यतिभ्रष्टेन स्वगृहीतस्य यत्याश्रमस्य दूषणादिदमवलगितम् ॥

त्यजनाद् यथा प्रबोधचन्द्रोदये—

'क्षपणकः—

*अइ पीणघणत्थणसोहणि! फळितत्थकुळंगविळोअणि!।
जदि ळमसे कावाळिणि! भावेहिं किं कळिश्शदि शावकः॥

अहो कावाळिणीए दस्सणं एक्कं एव्व शोक्खमोक्खशाहणं। भो आआळिए! अहगे तुज्झ शंपदं दाशे शंवुत्ते। मं पि महाहैळवाणं शाशणे दिक्खेशु।' इत्यादौ क्षपणकस्य स्वमार्गपरिभ्रंशोऽवलगितम्।

* अयि पीनघनस्तनशोभने! परित्रस्तकुरङ्गविलोचने!।
यदि रमसे कापालिनि! भावै. किं करिष्यति श्रावकः॥

अथावस्कन्दः —

अवस्कन्दस्त्वनेकेषामयोग्यस्यैकवस्तुनः ।
सम्बन्धाभासकथनात् स्वस्वयोग्यत्वयोजना ॥ २७२ ॥

यथा प्रहसने —

'यतिः — साक्षाद्भूतं वदति कुचयोरन्तरं द्वैतवादं
बौद्धः — भावो बोधक्षणिकमहिमा सौगते दत्तपादः ।
जैनः — बाह्वोर्मूले नयति शुचितामार्हती काचिदीक्षा
सर्वे — नाभेर्मूलं प्रथयति फलं सर्वसिद्धान्तसारम् ॥'

अत्र यतिबौद्धजैनानां गणिकायां स्वसिद्धान्तधर्मसम्बन्धकथनेन स्वस्वपक्षपरिग्रहयोग्यत्वयोजनादवस्कन्दः ॥

अथ व्यवहारः —

व्यवहारः स्वसंवादो द्वित्राणां हास्यकारणम् ।

यथा प्रहसने—'बौद्धः — (यतिं विलोक्य) कुतो मुण्डः एकदण्डी । मिथ्यातीर्थः — (विलोक्य दृष्टिमपकर्षन् आत्मगतम्) क्षणिकवादी न संभाषणीय एव । तथापि दण्डमन्तर्धाय निरुत्तरं करोमि । (प्रकाशम्) अये शून्यवादिन्! अदण्डो[1] मुण्डोऽहमागलादस्मि[2] । जैनः — (आत्मगतम्) नूनमसौ मायावादी । भवतु, अहमपि किमप्यन्तर्धाय प्रस्तुतं पृच्छामि । (प्रकाशम्) अये महापरिणामवादिन्! बृहद्बीज! लोम्नां समानजातीयत्वेऽपि केषाञ्चित् सङ्कर्तनम् अन्येषां संर-

---

१. 'वेणुद' ग. घ. पाठः. २. 'य' ग. पाठः.

क्षणमिति व्यवस्थितेः किं कारणम् । मिथ्यातीर्थः — जीवदमेध्यमङ्गं धारको नरपिशाचोऽयम् अन्तर्धायापि न संभाषणीयः । निष्कच्छकीर्तिः — (सादरम्) सखे! आर्हतमुने! वादे त्वयायमप्रतिपत्तिं नाम निग्रहस्थानमारोपितो मायावादी । मिथ्यातीर्थः — (आत्मगतम्) नूनमिमावपि मादृशावेव लिङ्गधारणमात्रेण कुक्षिम्भरी स्याताम् । (इति पिप्पलमूलवेदिकायां निषीदति ।)' इत्यत्र यतिबौद्धजैनानां संवादो व्यवहारः ॥

अथ विप्रलम्भः —

विप्रलम्भो वञ्चना स्याद् भूतावेशादिकैतवात् ॥२७२॥

यथा प्रहसने —

'प्रियाहं सर्वभूतानां नाम्ना स्वच्छन्दभक्षिणी ।
गृह्णाम्येनं यदि त्रातुं कृपा वः श्रूयतामिदम् ॥
सुराघटानां साहस्रसप्तत्या दृप्तगड्डुरैः ।
छागैश्च दशभिः कार्या चिरण्टीतर्पणक्रिया ॥
अद्य कर्तुमशक्यं चेत् तत्पर्याप्ततमं धनम् ।
आस्थाप्यमस्या यक्षिण्या जरठायाः पदाञ्चले ॥

(इति पुनरपि व्यात्तवदनं नृत्यति ।) निष्कच्छकीर्तिव्रतिनौ — किमुत विधेयम् । मिथ्यातीर्थः — प्रत्याम्नायपक्ष एव युज्यते । अरूपाम्बरः — (आत्मगतम्) किं करोमि, न किमपि हस्ते पणादिकम् । (प्रकाशम्) भोः! जीवहिंसाकृते प्रत्याम्नायकरणमपि न मे सम्मतम् । मिथ्यातीर्थः — भोः अहिंसावादिन्! म्रियमाणः प्राणी न रक्षणीय इति किं

युष्मद्धर्मः। अरूपाम्बरः— (साक्षेपम्) एकेन सुखमुपादेयम् अन्येन धनं प्रदेयमिति युष्मद्धर्मः। (निष्कच्छकीर्तिः सान्तर्हासं स्वधनं यतिधनं च जरठायाः पदाञ्चले बद्ध्वा सबलात्कारं जैनस्य कटकं तस्याः पादमूलेऽर्पयति।) मधुमल्लिका — (साङ्गभङ्गं प्रकृतिमुपगम्य सस्मरणभयामिव) अम्मो देवदा [1]विप्पळम्भेण कुप्पिस्सदि। ता चिरण्टिआतप्पणं कादुं गच्छेमि। (इति क[2]टकमादाय निष्क्रान्ता।)' इत्यादौ भूतावेशकैतवेन जैनबौद्धसंन्यासिनो विलोभ्य धनं कयापि गणिकया गृहीतमित्ययं विप्रलम्भः॥

अथोपपत्तिः—

उपपत्तिस्तु सा प्रोक्ता यत् प्रसिद्धस्य वस्तुनः।
लोकप्रसिद्धया युक्त्या साधनं हास्यहेतुना॥ २७४॥

यथा तत्रैव प्रहसने— 'मिथ्यातीर्थः— (पुरोऽवलोक्य) अये उपसरित्तीरं पिप्पलनामा वनस्पतिः, यश्च गीतासु भगवता निजविभूतितया निर्दिष्टः। (विचिन्त्य) कथमस्य तरोरियमतिमहिमसम्भावना। (विमृश्य) — उपपद्यत एव,

तत्पदं तनुमध्याया येनाश्वत्थदलोपमम्।
तदश्वत्थोऽस्मि वृक्षाणामित्यूचे भगवान् हरिः॥'

अत्र लोकप्रसिद्धेनाश्वत्थदलोरुमूलयोः साम्येन हेतुना लोकप्रसिद्धस्यैव भगवदश्वत्थयोरैक्यस्य साधनं हास्यकरणमुपपत्तिः॥

अथ भयं—

स्मृतं भयं तु नगरशोधकादिकृतो दरः।

---

१. 'टं त', २. 'टमा' घ. पाठ.

यथा तत्रैव प्रहसने — 'जैनः — अहो सराजकोऽयं विषयः, यन्नगरपरिसराश्रिततपस्विनां धनं चोर्यते । (इत्युद्बाहुराक्रोशति । ) अये किमपहृतं धनं कियद् । (इति नगररक्षकास्तं परितः प्रविश्य परिसर्पन्ति । ) अरूपाम्बरः — धिक् कष्टं नगरशोधकाः समायान्ति । (इत्यूर्ध्वबाहुरोष्ठस्पन्दनं करोति । ) (मिथ्यातीर्थो गणिकामपक्षिप्य समाधिं नाटयति । ) (निष्कच्छकीर्तिरेकपादेनावतिष्ठमानः कराङ्गुलीर्गणयति । )' इत्या(दि ? दौ) जैनादीनां भयकथनाद् भयम् ॥

अथानृतम् —

अनृतं तु भवेद् वाक्यमसत्यस्तुतिगुम्फितम् ॥ २७५ ॥
तदेवानृतमित्याहुरपरे स्वमतस्तुतेः ।

यथा तत्रैव प्रहसने —

'बालातपेन परिमृष्टमिवारविन्दं
माञ्जिष्ठचेलमिव मान्मथमातपत्रम् ।
सालक्तलेखमिव सौख्यकरण्डमद्य
यूनां मुदे तरुणि! तत्पदमार्तवं ते ॥'

(अत्र)आर्तवारुणस्योरुमूलस्य वर्णनादिदमनृतम् ।

स्वमतं तु यथा कर्पूरमञ्जर्यां —

¶'रण्डा चण्डा दिक्खिआ धम्मदारा
मज्जं[1] मंसं पिज्जए[2] खज्जए(त्थ ? अ) ।

---

१. 'ञ्ज', २. 'वि' ग. पाठः.

---

¶ रण्डा चण्डा दीक्षिता धर्मदारा मद्य मांसं पीयते खाद्यते च ।
भिक्षा भोज्य चर्मखण्ड च शय्या कौलो धर्मः कस्य नो भवति रम्यः ॥

हिक्खा होज्जं चम्मखण्डं च सेँज्जा
कोळो धम्मो कस्स णो होइ रम्मो ॥'

अथ विभ्रान्तिः—

वस्तुसाम्यकृतो मोहो विभ्रान्तिरिति गीयते ॥ २७६ ॥

यथा तत्रैव प्रहसने—'बौद्धः—(पुरोऽवलोक्य)

हेमकुम्भवती रम्यतोरणा चारुदर्पणा ।
कापि गन्धर्वनगरी दृश्यते भूमिचारिणी ॥

जैनः—अयि क्षणभङ्गवादिन्! एतदुत्पातफलं प्रथमदर्शिनो भवत एव परिणमेत् । (इति लोचने निमीलयति ।) बौद्धः—(पुनर्निर्वर्ण्य) हन्त किमपदे भ्रान्तोऽस्मि ।

न पुरीयं विशालाक्षी न तोरणमिमे भ्रुवौ ।
न दर्पणमिमौ गण्डौ न च कुम्भाविमौ स्तनौ ॥'

इत्यत्र बौद्धस्य मोहो विभ्रान्तिः ॥

अथ गद्गदवाक्—

असत्यरुदितोन्मिश्रं वाक्यं गद्गदवाग् भवेत् ।

यथा तत्रैव प्रहसने—'(भगिन्यौ परस्परमाश्लिष्य रुदित इव ।)

गुह्यग्राही—(आत्मगतम्)

अनुपात्तबाष्पकणिकं गद्गदनिःश्वासकलितमव्यक्तम् ।
अनयोरसत्यरुदितं सुरतान्तदशां व्यनक्तीव ॥'

अत्र गद्गदवाक्त्वं स्पष्टमेव ॥

अथ प्रलापः—

प्रलापः स्यादयोग्यस्य योग्यत्वेनानुमोदनम् ॥ २७७ ॥

यथा तत्रैव प्रहसने — 'राजा — (सौदार्योद्रेकम्) अये बिडालाक्ष! अस्मदीये नगरे विषये च,

पतिहीना च या नारी जायाहीनश्च यः पुमान्।
तौ दम्पती यथाकामं भवेतामिति घोष्यताम्॥

बिडालाक्षः — देवः प्रमाणम्। (इति सानुचरो निष्क्रान्तः।) गुह्यग्राही — (सश्लाघागौरवम्)

नष्टाश्वभग्नशकटन्यायेन प्रतिपादितम्।
उचिता ते महाराज! सेयं कारुण्यघोषणा॥

अपिच,

मन्वादयो महीपालाः शतशो गामपालयन्।
न केनापि कृतो मार्ग एवमाश्चर्यसौख्यदः॥'

अत्रायोग्यस्यापि राजादेशस्य धर्माधिकारिणा गुह्यग्राहिणा न्यायपरिकल्पनया योग्यत्वेनानुमोदनादयं प्रलापः।

शुद्धं कीर्णं वैकृतं च तच्च प्रहसनं त्रिधा।
शुद्धं श्रोत्रियवाक्याद्यैर्वेषभाषादिसंयुतम्॥ २७८॥
चेटचेटीजनव्याप्तं कीर्णं लक्ष्यं निरूप्यताम्।
आनन्दकोशप्रमुखं वैकृतं तदुदाहृतिः॥ २७९॥

अथ डिमः —

ख्यातेतिवृत्तं निर्हास्यश्रृङ्गारं रौद्रमुद्रितम्।
कैशिकीवृत्तिविरलं भारत्यारभटीस्फुटम्॥ २८०॥
नायकैरुद्धतैर्देवयक्षराक्षसपन्नगैः।
गन्धर्वभूतवेतालसिद्धविद्याधरादिभिः॥ २८१॥

समन्वितं षोडशभिर्न्यायमार्गणनायकम् ।
चतुर्भिरङ्कैरन्वीतं निर्विमर्शकसन्धिभिः ॥ २८२ ॥
निर्घातोल्कोपरागादिघोरक्रूराजिसम्भ्रमम् ।
सप्रवेशकविष्कम्भचूलिकं हि डिमं विदुः ॥ २८३ ॥
अस्योदाहरणं ज्ञेयं वीरभद्रविजृम्भणम् ।

अथेहामृगः—

यत्रेतिवृत्तं मिश्रं स्यात् सविष्कम्भप्रवेशकाः ॥ २८४ ॥
चत्वारोऽङ्का निर्विमर्शगर्भाः स्युः सन्धयस्त्रयः ।
धीरोद्धतश्च प्रख्यातो दिव्यो मर्त्योऽथ नायकः ॥ २८५ ॥
दिव्यस्त्रियमनिश्शङ्कं(?) कन्यां चाहर्तुमुद्यतः ।
स्त्रीनिमित्ताजिसंरम्भः पञ्चषाः प्रतिनायकाः ॥ २८६ ॥
रसा निर्भरबीभत्सा वृत्तयः कैशिकीं विना ।
स्वल्पस्तस्याः प्रवेशो वा सोऽयमीहामृगो मतः ॥ २८७ ॥
व्याजान्निवारयेदत्र सङ्ग्रामं भीषणक्रमम् ।
तस्योदाहरणं ज्ञेयं प्राज्ञैर्मायाकुरङ्गिका ॥ २८८ ॥
इत्थं श्रीशिङ्गभूपेन सर्वलक्षणशालिना ।
सर्वलक्षणसम्पूर्णं लक्षितो रूपकक्रमः ॥ २८९ ॥
अथ रूपकनिर्माणपरिज्ञानोपयोगिनी ।
श्रीशिङ्गधरणीशेन परिभाषा निरूप्यते ॥ २९० ॥
परिभाषात्र मर्यादा पूर्वाचार्योपकल्पिता ।
सा हि नौरतिगम्भीरं विविक्षोर्नाट्यसागरम् ॥

एषा च भाषानिर्देशनामभिस्त्रिविधा मता ।
तत्र भाषा द्विधा भाषा विभाषा चेति भेदतः ॥ २९२ ॥

चतुर्दश विभाषाः स्युः प्राच्याद्या वाक्यवृत्तयः ।
आसां संस्काररराहित्याद् विनियोगो न कथ्यते ॥

उत्तरादिषु तद्देश्यव्यवहारात् प्रतीयताम् ।
भाषा द्विधा संस्कृता च प्राकृती चेति भेदतः ॥

कौमारपाणिनीयादिसंस्कृता संस्कृता मता ।
इ(त्थं?यं) तु देवतादीनां मुनीनां नायकस्य च ॥ २९५ ॥

विप्रक्षत्त्रवणिक्छूद्रमन्त्रिकञ्चुकिनामपि ।
लिङ्गिनां च विटादीनां योगिनीनां प्रयुज्यते ॥ २९६ ॥

अथ प्राकृती—

प्रकृतेः संस्कृतायास्तु विकृतिः प्राकृती मता ।
षड्विधा सा प्राकृतं च शौरसेनी च मागधी ॥ २९७ ॥

पैशाची चूलिका पैशाच्यपभ्रंश इति क्रमात् ।
अत्र तु प्राकृतं स्त्रीणां सर्वासां नियतं भवेत् ॥ २९८ ॥

क्वचिच्च देवीगणिकामन्त्रिजाधीतियोषिताम् ।
योगिन्यप्सरसोः शिल्पकारिण्या अपि संस्कृतम् ॥

ये नीचाः कर्मणा जात्या तेषां प्राकृतमुच्यते ।
छद्मलिङ्गवतां तद्वज्जैनानामिति केचन ॥ ३०० ॥

अधमे मध्यमे चापि शौरसेनी प्रयुज्यते ।
धीवराद्यतिनीचेषु मागधी च नियुज्यते ॥ ३०१ ॥

रक्षःपिशाचनीचेषु पैशाचीद्वितयं भवेत् ।
अपभ्रंशस्तु चण्डालयवनादिषु युज्यते ॥ ३०२ ॥

नाटकादावपभ्रंशविन्यासस्यासहिष्णवः ।
अन्ये चण्डालकादीनां मागध्यादीन् प्रयुञ्जते ॥ ३०३ ॥

सर्वेषां कारणवशात् कार्यो भाषाव्यतिक्रमः ।
माहात्म्यस्य परिभ्रंशो मदस्यातिशयस्तथा ॥ ३०४ ॥

प्रच्छादनं च विभ्रान्तिर्यथालिखितवाचनम् ।
कदाचिदनुवादं च कारणानि प्रचक्षते ॥ ३०५ ॥

अथ निर्देशपरिभाषा—

साक्षादनामग्राह्याणां जनानां[1] प्रतिसंज्ञया ।
आह्वानभङ्गी नाट्यज्ञैर्निर्देश इति गीयते ॥ ३०६ ॥

स त्रिधा पूज्यसदृशकनिष्ठविषयत्वतः ।
पूज्यास्तु देवा मुनयो लिङ्गिनस्तत्समाः स्त्रियः ॥ ३०७ ॥

बहुश्रुताश्च भगवच्छब्दवाच्या भवन्ति हि ।
आर्येति ब्राह्मणो वाच्यो वृद्धस्तातेति भाष्यते ॥ ३०८ ॥

उपाध्यायेति चाचार्यो गणिका त्वज्जुकाख्यया ।
महाराजेति भूपालो विद्वान् भाव इतीर्यते ॥ ३०९ ॥

छन्दतो नामभिर्वाच्या ब्राह्मणैस्तु नराधिपाः ।
देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा ॥ ३१० ॥

---

१. 'नामिह स' ग. पाठः.

सार्वभौमः परिजनैर्भट्टभट्टारकेति च ।
वाच्यो राजेति मुनिभिरपत्यप्रत्ययेन वा ॥ ३११ ॥
विदूषकेण तु प्रायः सखे राजन्नितीच्छया ।
ब्राह्मणैः सचिवो वाच्यो ह्यमात्य सचिवेति च ॥ ३१२ ॥
शेषैरार्येत्यथायुष्मन्निति सारथिना रथी ।
तपस्विसाधुशब्दाभ्यां प्रशान्तः परिभाष्यते ॥ ३१३ ॥
स्वामीति युवराजस्तु कुमारो भर्तृदारकः ।
आवुत्तेति स्वसुर्भर्ता स्यालेति पृतनापतिः ॥ ३१४ ॥
भट्टिनी स्वामिनी देवी तथा भट्टारिकेति च ।
परिचारजनैर्वाच्या योषितो राजवल्लभाः ॥ ३१५ ॥
राज्ञा तु महिषी वाच्या देवीत्यन्याः प्रिया इति ।
सर्वेण पत्नी त्वार्येति पितुर्नाम्ना सुतोऽस्य च ॥ ३१६ ॥
तातपादा इति पिता मातम्बेति सुतेन तु ।
ज्येष्ठास्त्वार्या इति भ्रात्रा तथा स्युर्मातुलादयः ॥ ३१७ ॥

अथ सदृशनिर्देशः—

सदृशः सदृशा वाच्यो वयस्येत्याह्वयेन वा ।
हलेति सख्या तु सखी कथनीया सखीति वा ॥ ३१८ ॥

अथ कनिष्ठनिर्देशः—

सुतशिष्यकनीयांसो वाच्या गुरुजनेन हि ।
वत्सपुत्रकदीर्घायुस्तातजातेतिसंज्ञया ॥ ३१९ ॥
अन्यः कनीयानार्येण जनेन परिभाष्यते ।
शिल्पाधिकारनामभ्यां भद्र भद्रमुखेति वा ॥ ३२० ॥

वाच्ये नीचातिनीचे तु हण्डे हञ्जे इति क्रमात् ।
भर्त्रा वाच्याः स्वस्वनाम्ना भृत्याः शिल्पोदितेन वा ॥

एवमादिप्रकारेण योज्या निर्देशयोजना ।
लोकशास्त्राविरोधेन विज्ञेया वाक्यकोविदैः ॥ ३२२ ॥

अथ नामपरिभाषा—

अनुक्तनाम्नः प्रख्याते कञ्चुकिप्रभृतेरपि ।
इतिवृत्ते कल्पिते तु नायिकादेरपि स्फुटम् ॥ ३२३ ॥
रसवस्तूपयोगीनि कविर्नामानि कल्पयेत् ।
विनयंधरबाभ्रव्यजयंधरजयादिकम् ॥ ३२४ ॥
कार्यं कञ्चुकिनां नाम प्रायो विश्वाससूचकम् ।
लतालङ्कारपुष्पादिवस्तूनां ललितात्मनाम् ॥ ३२५ ॥
नामभिर्गुणसिद्धैर्वा चेटीनां नाम कल्पयेत् ।
करभः कलहंसश्चेत्यादि नामानुजीविनाम् ॥ ३२६ ॥
कर्पूरचण्डकाम्पिल्येत्यादिकं नाम वन्दिनाम् ।
सुबुद्धिवसुभूत्यादि मन्त्रिणां नाम कल्पयेत् ॥ ३२७ ॥
देवरातः सोमरात इति नाम पुरोधसः ।
श्रीवत्सो गौतमः कौत्सो गार्ग्यो मौद्गल्य इत्यपि ॥
वसन्तकः कापिलेय इत्याख्येयो विदूषकः ।
प्रतापवीरविजयमानविक्रमसाहसैः ॥ ३२९ ॥
वसन्तभूषणोत्तंसशेखरोपपदोत्तरैः ।
वीरोत्तराणां नेतॄणां नाम कुर्वीत कोविदः ॥ ३३० ॥

चन्द्रापीडः कामपाल इत्याद्यं ललितात्मनाम् ।
उग्रवर्मा चण्डसेन इत्याद्युद्धतचेतसाम् ॥ ३३१ ॥
दत्तसेनान्तनामानि वैश्यानां कल्पयेत् सुधीः ।
कर्पूरमञ्जरी चन्द्ररेखा रागतरङ्गिका ॥ ३३२ ॥
पद्मावतीति प्रायेण नाम्ना वाच्या हि नायिका ।
देव्यस्तु धारिणीलक्ष्मीवसुमत्यादिनामभिः ॥ ३३३ ॥
भोगावती कान्तिमती कमला कामवल्लरी ।
इरावती हंसपदीत्यादिनाम्ना तु भोगिनी ॥ ३३४ ॥
विप्रक्षत्त्रविशः शर्मवर्मदत्तान्तनामभिः ।
शिखण्डाङ्गदचूडान्तनाम्ना विद्याधराधिपाः ॥ ३३५ ॥
कुण्डलानन्दघण्टान्तनाम्ना कापालिका जनाः ।
योगसुन्दरिका वंशप्रभा विकटमुद्रिका ॥ ३३६ ॥
शङ्खकेयूरिकेत्यादिनाम्ना कापालिकस्त्रियः ।
आनन्दिनी सिद्धिमती श्रीमती सर्वमङ्गला ॥ ३३७
यशोवती पुत्रवतीत्यादिनाम्ना सुवासिनी ।
इत्यादि सर्वमालोच्य लक्षणं कृतबुद्धिना ॥ ३३८ ॥
कविना कल्पितं काव्यमाचन्द्रार्कं प्रकाशते ।
लक्ष्यलक्षणनिर्माणविज्ञानकृतबुद्धिभिः ॥ ३३९ ॥
विवक्ष्यतामयं ग्रन्थो विमत्सरमनीषया ॥

संरम्भादनपोतशिङ्गनृपतेर्धाटीसमाटीकने
निस्साणेषु धणं धणं धणमिति ध्वानानुसन्धायिषु ।

मोदन्ते हि रणं रणं रणमिति प्रौढास्तदीया भटा
भ्रान्तिं यान्ति तृणं तृणं तृणमिति प्रत्यर्थिपृथ्वीभुजः ॥
मत्वा धात्रा तुलायां लघुरिति धरणीं शिङ्गभूपालचन्द्रे
सृष्टे तत्रातिगुर्व्यां तदुपनिधितया स्थाप्यमानैः क्रमेण ।
चिन्तारत्नौघकल्पद्रुमततिसुरभीमण्डलैः पूरितान्ता-
प्यूर्ध्वं नीता लघिम्ना तदरिकुलशतैः पूर्यतेऽद्यापि सा द्यौः ॥

इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगण्डभैरवश्रीयन्नपोत-
नरेन्द्रनन्दनभुजबलभीमश्रीशिङ्गभूपालविरचिते
रसार्णवसुधाकरनाम्नि नाट्यालङ्कारे भावो-
ल्लासो नाम तृतीयो विलासः ।

---

समाप्तश्चायं रसार्णवसुधाकरः ॥

---

शुभं भूयात् ।

# Ready for sale.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला – दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâṇa. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णव. (Kâvya) by Nîlakaṇtha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhaṭṭa with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्तिः (Vyâkaraṇa) by Saraṇadeva. | 2 | 0 | 0 |
| No 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshaṇa) by Nîlakaṇtha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

No. 14 — नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. 3 8 0

No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second edition) 1 8 0

No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. 1 8 0

No. 17—पञ्चरात्रम् (Do.) Do. 1 0 0

No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. 4 0 0

No 19—मानमेयोदय (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. 1 4 0

No. 20—अविमारकम् (Nâtaka) by Bhâsa 1 8 0

No 21—बालचरितम् (Do.) Do. 1 0 0

No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa 1 8 0

No. 23—नानार्थार्णवसंक्षेप. (Kosa) by Kesavaswâmin (Part I 1 & 2 Kândas) 1 12 0

No. 24—जानकीपरिणय. (Kâvya) by Chakrakavi. 1 0 0

No 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri 0 12 0

No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa 0 12 0

No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1 & 2 Sargas) 1 12 0

No. 28—वैखानसधर्मप्रश्न. (Dharmasûtra) by Vikhanas 0 8 0

No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II 3rd Kânda) 2 4 0

No. 30—वास्तुविद्या (Silpa) 0 12 0

No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas) 1 0 0

No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Aruṇagirinâtha and Vivaraṇa of Nârâyaṇa Paṇḍita (Part II. 3rd, 4th & 5th Sargas) 2 8 0

No. 33—वाररुचसंग्रह (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana 0 8 0

No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûḍâmaṇimakhin 1 4 0

No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha 1 8 0

No 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivaraṇa of Nârâyana Panditah (Part III. 6th, 7th & 8th sargas) 3 0 0

No 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary 0 4 0

No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda) 2 0 0

No. 39—चारुदत्तम् (Nâtaka) by Bhâsa 0 12 0

No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Srî Mankhuka and its commentary by Samudrabandha 2 8 0

No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada 0 4 0

No. 42—प्रतिमानाटकम् (Nataka) by Bhâsa 1 8 0

No 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tikasarvaswa of Vandyaghatiya-Sarvananda (Part II 2nd Kanda 1—6 Vargas) 2 8 0

No 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama 0 4 0

No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) 1 0 0

No. 46—परिभाषावृत्ति. (Vyâkarana) by Nîlakantha Dîkshita 0 8 0

No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvatî. (Part I) 1 12 0

No. 48— Do. Do. (Part II) 2 0 0

No. 49—गोलदीपिका (Jyotisha) by Parameswara 0 4 0

No. 50—रसार्णवसुधाकर. (Alankara) by Sri Singa Bhupala 3 0 0

***Apply to:—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*